# माघेऽलङ्कारविमर्शः

# [ MAGHELANKARAVIMARSHAH ]

कल्याण भारती
अध्यक्ष, संस्कृत-विभाग
जोधपुर-विश्वविद्यालय

प्राक्कथनम् :

प्रो० रसिक बिहारी जोशी
अध्यक्ष, संस्कृत-विभाग
दिल्ली-विश्वविद्यालय

उषा पब्लिशिंग हाउस
जोधपुर-जयपुर

❀ संचालिका : उषा भारती
उषा पब्लिशिंग हाउस (रजि०)
नीम स्ट्रीट, वीर मोहल्ला
जोधपुर-३४२००१
❀ शाखा : माधो बिहारीजी का बाग
स्टेशन रोड,
जयपुर-३०२००१

❀ पुस्तक : माघेऽलङ्कारविमर्शः
[ MAGHELANKARAVIMARSHAH ]
❀ प्रथम संस्करण : दीपावली १९७८
❀ मुद्रक : इण्डिया प्रिंटर्स, जोधपुर

# प्राक्कथनम्

विद्वद्वरेण श्रीमता कल्याणभारतीमहोदयेन विरचितो 'माघेऽलङ्कारविमर्श' इत्याख्यो ग्रन्थ स्थालीपुलाकन्यायेन मया सामोदमालोकितः। जोधपुरविश्वविद्यालयीये मदीये स्थितिकाले महाभागेनऽनेन सह शिशुपालवधीयानामलङ्काराणमसकृच्चर्चा समजनि । न खलु कुत्रापि शिशुपालवधमधिकृत्यालङ्कारशास्त्रदिशाऽलङ्काराणामेतादृशो विमर्शो नयनगोचरतामागच्छतीति सत्यम् । दिष्ट्या वर्धाप्यते श्रीमान् भारतीमहोदयः। मम्मटदर्पणकारादीनां लेखकेन भेदोपभेदसङ्गमनपूर्वकं शिशुपालवधेऽन्विष्टानि लक्षणानि यथा निदर्शितानि तद् दृष्ट्वा नूनमाश्चर्यमावहति चेतः । ग्रन्थोऽयं लेखकमहोदस्य साहित्यशास्त्रपारङ्गमत्वं प्रमाणयतीति नास्ति सन्देहकणिकापि। इयं कृतिः कस्मैचिद् विश्वविद्यालयाय पीएच० डी० इत्युपाधये समर्पिताऽभविष्यच्चेत् तर्हि नूनं लेखकोऽयममुमुपाधिमार्जयिष्यदिति मे प्रत्ययः।

अनेन ग्रन्थेन न केवलं माघेऽलङ्कारान् जिज्ञासूनामुपकारः सम्पत्स्यते, अपितु अन्यान्यपि महाकाव्यान्यधिकृत्यालङ्कारानध्येतुं काचिदभिनवा पद्धतिः शोधार्थिनां कृते निदर्शिता भविष्यति। आशास्यते यत् संस्कृतालङ्कारप्रणयिनो विद्वांसो ग्रन्थस्यास्य स्वागतं व्याहरन्तो माघस्यालङ्कारिकहृदयस्य रसास्वादं करिष्यन्तीति सुहृत्प्रवराय श्रीकल्याणभारतीमहाभागाय सर्वात्मना कल्याणं ब्रवीमि ।

दिल्ली-विश्वविद्यालयः,
दिल्ली।

रसिक विहारी जोशी
एम० ए०, पीएच० डी०, डी० लिट् (पेरिस),
प्रोफेसर तथा संस्कृत-विभागाध्यक्षः

# आमुखम्

अलङ्कारशास्त्रस्य काव्यप्रकाशध्वन्यालोकादिकठिनग्रन्थान् पंच महाकाव्यादीनि च पाठयतो मम प्रायशः पंचविंशतिवर्षात्मके काले महाकवेः श्रीमाघस्य शिशुपालवधेऽलङ्कारप्रयोगनैपुण्यं मनः मे भृशं समाकृष्टवत् । मल्लिनाथस्य सर्वङ्कषानाम्नी टीकां पाठं पाठमहमनुभूतवान् यन्मल्लिनाथेनापि कादाचित्क एवालङ्कारनिर्देशः कृतः । महामहोपाध्यायहरिदाससिद्धान्तवागीशभट्टाचार्येणापि सत्यं निर्दिष्टा यत्र तत्र माघेऽलङ्कारास्तथापि शिशुपालवधेऽलङ्काराणां साङ्गोपाङ्गमध्ययनं विद्वद्भिर्विद्यार्थिभिश्च प्रतिक्षितमेवातिष्ठदिति कृत्वा मया विषयोऽयं शोधकार्यार्थं गृहीतः । शनैः शनैः पिपीलिकाधान्यकणग्रहणन्यायेन क्वचिन्मम्मटमनुसृत्य क्वचिच्च दर्पणकारदिशा सर्वेऽप्यलङ्काराः सभेदोपभेदा ग्रन्थेऽस्मिन् सुस्पष्टं विवेचिताः ।

प्रस्तुतेऽस्मिन् ग्रन्थे महाकाव्ये प्रयुक्तानां सर्वेषामलङ्काराणां भेदा उपभेदाश्च सोदाहरणं प्रदर्शिताः सन्ति । केन वा न ज्ञायते संस्कृतसाहित्येऽलङ्काराणां महत्त्वम् । संस्कृतकाव्यशास्त्रं परम्परयालङ्कारशास्त्रनाम्ना पण्डितपरम्परायां सुप्रसिद्धमस्ति । वस्तुतः प्राचीनानां साहित्यशास्त्रिणां दृष्ट्यालङ्काराणामेव प्राधान्यमत्र हेतुः प्रतिभाति । अलमुपसर्गपूर्वकात् कृधातोर्भावकर्मणि घञ्प्रत्यये कृते सति 'अलङ्करणमलङ्कारः', अलङ्क्रियतेऽनेन वेत्यलङ्कार इति व्युत्पत्त्यालङ्काराणां काव्यशोभाधायकत्वं न केवलं बाह्यस्वरूपमात्रमपितु काव्यान्तर्वर्तित्वात् काव्यधर्मस्वरूपेण शोभाधायकत्वं सौन्दर्याधायकत्वं वा सर्वथा सुप्रसिद्धम् । काव्यसौन्दर्यमिदमालङ्कारिकाणां दृष्ट्या शब्दमूलकत्वेनार्थमूलकत्वेन च द्वैविध्यं भजते । शब्दार्थोभयमूलकत्वेऽप्यलङ्काराणामर्थालंकारा एव प्रधानत्वेन सौन्दर्यचूडामणित्वमवगाहन्ते, यतोहि शब्दालङ्कारास्तु

कर्णयोरानन्दोत्पादकध्वनिजनकत्वेन केवलमुच्चारणसौन्दर्यं बोधयन्ति । अर्थालङ्कारास्तावद् रम्यार्थप्रतिपादकत्वेन सहृदयहृदयाह्लादजनकत्वेन च वैशिष्ट्यं धारयन्तीति दृष्ट्या प्रस्तुतस्य ग्रन्थस्य प्रथमे भागे ग्रन्थविस्तरभिया शिशुपालवधीया केवलमर्थालङ्काराः विविच्यन्ते । शब्दालङ्कारास्तु न चिरं प्रकाशयिष्यमाणे द्वितीये भागे समुपस्थापयिष्यन्त इति शब्दालङ्कारानुरागिणः कृपया प्रतीक्षन्तां कञ्चित् कालमित्यभ्यर्थये ।

तत्रादौ भूमिकाप्रस्थानक्रमेण काव्यं ग्राह्यमलङ्कारादिति वामनाचार्यस्य सिद्धान्तमनुसृत्यालङ्कारं विना काव्यस्याग्राह्यत्वात्, कुन्तकस्य सिद्धान्तेनापि सालङ्कारस्य काव्यतामङ्गीकृत्यालङ्काराणां महत्त्वप्रतिष्ठा संस्थापितवानस्मि । अलङ्कारशब्दस्य व्युत्पत्तिं लक्षणञ्च समालोच्यालङ्कारशास्त्रेऽलङ्काराणां विकासोऽपि स्फुटं प्रतिपादितः । तत्र रसरीत्यलङ्कारभेदेन त्रिविधं प्राचीनं प्रस्थानं निर्दिश्य, भामहात् पूर्ववर्तिभ्यो भरतादिभ्य समर्थं नवमशतकादारभ्य मध्यकाले विकासमाप्तानामर्थालङ्काराणां भेदानुसन्धानं सप्तदशशतकादेकोनविंशतिशतकपर्यन्तं प्रसृत नव्यकालप्रस्थानं समीचीनरीत्या निरूपितमस्ति । अलङ्काराणां वर्गीकरणमिदं भट्टोद्भटेन रुद्रटेन रुय्यकेण विद्यानाथेन दर्पणकारेण पण्डितराजेन जगन्नाथेन च यथोपस्थापितं तत्सर्वं सुसङ्गतमसङ्गतं वेति यथाविचारितं तेषामालङ्कारिकाणां निरूपणमेव प्रमाणम् ।

शिशुपालवधे वर्तमानानां प्रत्येकमलङ्कारस्य भेदोपभेदसहितं सोदाहरणं साङ्गोपाङ्गमन्वेषणं मया यथाविधि यथामति सम्पादितम् । तत्र पाठकानां सौविध्याय उदाहरणान्यपि तत्रैव निर्दिष्टानि सन्ति । अस्मिन् ग्रन्थे मया द्विषष्टिसङ्ख्यकानामलङ्काराणां भेदा विनिर्दिष्टाः । परिशिष्टे च प्रमुखाणामलङ्काराणां सूक्ष्मभेदनिदर्शनधिया वृक्षतालिका अपि संनिवेशिता सन्ति, येनालङ्कारस्वरूपं जिज्ञासूनां विद्यार्थिनां तालिकादर्शनमात्रेणैवालङ्काराणां भेदोपभेदबोधः सम्पद्येत । द्वितीये परिशिष्टे

चाकारादिक्रमेण [illegible] स्थाननिर्देशपूर्वकं सर्वेषामलङ्काराणां सूची संकलिता विद्यते ॥

अस्य ग्रन्थस्य प्रणयनं दिल्लीविश्वविद्यालयीयसंस्कृतविभागाध्यक्षाणां पण्डितप्रकाण्डानां कविप्रवराणां काव्यशास्त्रपारङ्गतानां डा० रसिकविहारिजोशीमहाभागानां प्रेरणापरागमनूनमित्येतेषां कृते नानृण्यमवगाहते चेतः । एवं स्वकीये जोधपुरविश्वविद्यालयीये स्थितिकाले नाहं केवलं पौनः पुन्येन ग्रन्थरचनार्थं समुत्प्रेरितः, अपितु अनेकाः क्लिष्टाः [illegible] लङ्काराणां विषये भूयस्यो दुर्घटाः अस्पष्टा ग्रन्थयः समुद्घाटिताः । एते स्वकीयेन नैसर्गिकेण सौजन्येन परमेण च सौहार्देन ग्रन्थममुं पुरोवागाशीर्वचोभिः समलङ्चक्रिरे, इति सरलं विद्वद्वरान् प्रति हार्दिकीं कृतज्ञतां वहामि । जोधपुरस्थराजस्थानप्राच्यविद्याप्रतिष्ठानस्य निदेशकाः अलङ्कारशास्त्रमर्मज्ञाः सौजन्यमूर्तयो डॉ० ब्रह्मानन्दशर्ममहोदया अपि पुस्तकमिदमवलोक्य सूक्ष्माक्षरतः प्रसज्य बहून् महत्त्वपूर्णोपदेशान् दत्तवन्त इति नूनमेतेभ्यो धन्यवादकुसुमाञ्जलिमर्पयामि ।

परमपूज्यानां गोवर्धनपीठाधीश्वराणां जगद्गुरुशङ्कराचार्याणां श्रीनिरञ्जनदेवतीर्थमहाभागानां जोधपुरनगरे चातुर्मास्यस्य निवसतिकाले-ऽवसरस्य श्रीगीताभवनस्य मन्त्रिरूपेण शङ्कराचार्यस्वागतसमितेश्च मन्त्रिरूपेण नूनं व्यापृततया नानुसन्धाने पर्याप्ते समये ममायुष्मती सुपुत्री कुमारी चन्द्रनन्दिनी अस्य ग्रन्थस्य सुस्पष्टाक्षरेण महता च परिश्रमेण प्रतिलिपिं कृतवतीति स्नेहार्द्रचेतसा स्वाशिषा तां योजयन्नस्याः सर्वविध कल्याणं भगवन्तं शङ्करं कामये । वर्षद्वयात्मकेऽस्मिन् काले अहर्निश विषयेऽस्मिन् प्रवर्तमानेन मया मम प्रियतमायाः श्रीमत्याः सुशीलनाम्न्याः यावान् समयो गृहीतस्तदर्थं तामपि सादरं सानुरागं सधन्यवादमभिनन्दयामि ।

जोधपुरविश्वविद्यालयेन ग्रन्थस्यास्य प्रकाशनार्थं वैदुष्यपूर्णग्रन्थप्रकाशनयोजनान्तर्गतं त्रिसहस्ररूप्यकमितमनुदानं प्रदत्तमिति जोधपुरविश्वविद्यालयीयेभ्यः प्रकाशनसमितेः सदस्याधिकारिभ्यो धन्यवादान् प्रयच्छामि ।

अनेन ग्रन्थेन अलङ्कारशास्त्रं पठतां विद्यार्थिनां लघीयानप्युपकारः सम्पत्स्यते चेत् धन्यमात्मानमाकलयिष्यामि । अलङ्कारशास्त्रविदां कृते त्वेतदेव वच्मि यद् यदि ते कृपया नीरक्षीरन्यायेन गुणानङ्गीकुर्युर्दोषांश्च मां प्रतिबोधयेयुस्तर्हि मम परिश्रमोऽयं साफल्यं लभेत । अन्यच्च- मर्त्यैरसर्वविदुरैर्विहिते क्व नाम ग्रन्थेऽस्ति दोषविरहः सुचिन्तितेऽपि इति न्यायात् मानवसुलभप्रमादस्य स्वाभाविकत्वात् यत्किमप्यत्राशुद्धं स्खलनं न्यूनत्वं वा सञ्जातं स्यात् तत् क्षमाशीलैः सुधीजनमहानुभावैः सस्नेहं परिष्करणीयमिति सप्रश्रयं विनिवेद्यते ।

जोधपुर-विश्वविद्यालय,
जोधपुर

विदुषां विधेया
कल्याणी भारती

# अनुक्रमणिका

# काव्यं ग्राह्यमलंकारात्

कवेः कर्म भावो वा काव्यम्। एष शब्दः कविशब्दात् ष्यञ् प्रत्यये कृते सिद्ध्यति। कविः शब्दोऽपि 'कुङ् शब्दे' 'कवृ वर्णने' वेति धातो: 'कौति, कवयति' वेति व्युत्पत्त्या निष्पद्यते। अनेन इदं आयातं यत् कवेर्गानम् वर्णनम् वा भवति तद् काव्यम्। तच्च शब्दसाहाय्यमेवापेक्षते। शब्दाश्च अर्थं विना न प्रवर्तन्ते। 'शब्दार्थौ काव्यम्' इत्यस्य पक्षस्य स्वरूपाधायक-लक्षणप्रणेता भामहः। तस्य काव्यलक्षणं यथा-शब्दार्थौ सहितौ काव्यम् इति। लक्षणमेतद् सामान्यजातीयं स्वरूपाधायकम् केवलं, न कथमपि उत्कर्षाधायकम्। यद्यपि साधारणतया समीक्षकोऽत्र स्वरूपाधायकमपि लक्षणं न स्पृशति, यतो हि सहितौ शब्दार्थौ तु शास्त्रात्मके वाङ्मयेऽपि भवतः। किन्तु सूक्ष्मेक्षिकया सुस्पष्टं यत् काव्यगतशब्दार्थयोः साहित्यं व्यापारप्राधान्याद् वैशिष्ट्याद् वा भिन्नमेव। एतद् समर्थयन्ति भामहपरवर्तिनः आलंकारिकाः अपि। यथा-

शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग्विदुः।
अर्थतत्त्वेन युक्तं तु वदन्त्याख्यानमेतयोः॥[1]

'शब्दार्थौ काव्यमिति' मतस्य समर्थकानां द्विविधो वर्गोऽधिगम्यते। एको वर्गस्तु शब्दार्थयोः काव्यत्वं मन्यमानः काव्यस्य केवलमुत्कर्षाधायकमेव लक्षणं विधत्ते। अपरश्च तस्य स्वरूपाधायकं लक्षणम्। अत्र शब्दार्थौ काव्यमित्यस्य सर्वोत्कर्षाधायकस्य च वर्गस्य प्रवर्तको नाट्यकारो भरत एव प्रतीयते। अतो नाट्यशास्त्रे काव्यस्य लक्षणं यथा—

मृदुललितपदाढ्यं गूढशब्दार्थहीनम्
जनपदसुखबोध्यं युक्तिमन्नृत्ययोज्यम्।
बहुकृतरसमार्गं सन्धिसन्धानयुक्तम्
भवति हि शुभकाव्यं नाटकप्रेक्षकाणाम्॥[2]

---

१. भट्टनायक; ध्वन्यालोके-पृ० ८७। २. भरत- १६.११८।

अत्र प्रथमे चरणे शब्दार्थं इति पदस्योल्लेखः, प्रतीयते तेन यदयं शब्दार्थौ काव्यमिति मनुते ।

पुनश्च तेनैव—

भविष्यतश्च लोकस्य सर्वकामार्थदर्शकम्,
दुःखार्तानां श्रमार्तानां शोकार्तानां तपस्विनाम्
विश्रामजननं लोके नाट्यमेतद् भविष्यति
श्रुतिस्मृतिसदाचारपरिशेषार्थकल्पनम् ॥[1]

अत्र भरतेन काव्योपयोगिताः पराकाष्ठां प्रापिताः । पश्चाद्भवैरालंकारिकैः प्रायः अस्योपबृंहणमेव कृतम् । काव्यमलौकिकं भवति । इदं न केवलं साधारणाल्लौकिकात् कर्मविशेषाद् अपितु ब्रह्मणो व्यापकात् सर्गादपि भिद्यते । अस्य सूक्ष्मं विवरणमालंकारिकैः तासु तासु कृतिषु विस्तरेण विहितम् ।

यथा—

नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥[2]
सरस्वती स्वादु तदर्थवस्तु निःष्यन्दमाना महतां कवीनाम् ।
अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम् ॥[3]
किन्त्वस्ति काचिदपरैव पदानुपूर्वी
यस्यां न किञ्चिदपि किञ्चिदिवावभाति ।
आनन्दयत्यथ च कर्णपथं प्रयाता
चेतः सतामभृतवृष्टिरिव प्रविष्टा ॥[4]

अत्रेदमलोकसामान्यं कार्यकारणपरंपराविरहितमानन्दं सहृदयैः जनैः संवेद्यते ह्लादैकमयमेतादृशमलौकिकं महात्म्यम् काव्यस्य । काव्योपयोगित्वं अंगीकृत्य मानवो न केवलं चतुर्वर्गव्यवहारौचित्यपरिज्ञानपरमाह्लादादिकं

१. भरत. १,१४,१११,११७ । २. काव्यप्रकाश १.१ ।
३. ध्वन्यालोकः १,६ । ४ काव्यसूत्रवृत्ति. १,२,२१ ।

प्राप्नोति अपितु अनुशासितः सन् विश्वस्य शांतिविकासव्यवस्थामपि संयोजयति। अनुशासनं वेदेतिहासशास्त्रादिभिः शक्यमिति परं तत्राल्पधियामसंयतात्मनां वासनाक्रान्तान्तःकरणानामभिजातानां गजमाल्यादीनाञ्च अप्रवृत्तेः, सद्बुद्धीनां सद्वृत्तानाञ्च तत्राधिकाराच्च। सर्वेषां सुगमं सरसं लघु च शिक्षणं शासनञ्च विदधत् काव्यं सफलप्रयोजनमुपदेष्टव्यम्। कविवचनायत्ता लोकयात्रा, सा च निःश्रेयसस्य मूलमिति महर्षयो यदाहुः –

काव्यमय्यो गिरो यावच्चरन्ति विशदा भुवि।

तावत्सारस्वतं स्थानं कविरासाद्य मोदते॥[1]

अलंकारोऽप्येषा कविवागेव काव्यपदवीं प्राप्नोति। कविस्पृहणीयाः प्राधान्येन भवन्त्यलंकाराः। एतेषां साहाय्येनैव कविरलौकिकान् भावान् विभावयति, तांश्च सरसान् समाकर्षकांश्च विधत्ते। अत एव वामनकुंतक-जयदेवादीनां मतानि संगच्छन्ते, निराक्रियन्ते चाभिमतानि मम्मटभट्टादीनाम्। काव्यलक्षणविचारे निरूपितानां काव्यलक्षणानाम् समीक्षया स्पष्टमिदं यत् प्रायः सर्वे एवालंकारिका अलंकारान् साक्षात् परंपरया वा काव्याङ्गत्वेनाभिमन्वते।

अंगीकरोति यः काव्यं शब्दार्थावनलंकृती।

असौ न मन्यते कस्मादनुष्णमनलंकृती॥[2]

इति मतमुपन्यस्यालंकारस्यानिवार्यताविरोधी मम्मटोऽपि नालंकार-व्यामोहमात्मनः संवृणुते, वर्णयति च विस्तरेणालंकारानेकषष्टिसंख्यकान् दशमोल्लासे।

– वामनमते तु 'काव्यं ग्राह्यमलंकारात्'[3] इति सिद्धांतितत्वेनालंकारं विना काव्यस्य ग्राह्यतैव न स्यात्। कुन्तकोऽपि 'सालंकारस्य काव्यता'[4] इति स्वीकृत्यालंकारस्य महत्तामनिवार्यताञ्चांगीकुरुते।

एवमलंकारस्य महत्वं काव्येऽक्षुण्णम्। न कोऽप्यालंकारिकः कदाप्यस्य विरोधाय तत्परोऽभवत्। यश्च साक्षात् परंपरया वा दृश्यते निषेधः काव्यप्रकाशादिग्रन्थेषु, स नालंकारविरोधबुद्ध्या अपितु दृष्टिविशेषसमर्थन-

---

१. काव्यमीमांसा, पृ० ६६।
२. चन्द्रालोकः १,८।
३. वामनः १,१,१।
४. वक्रोक्तिजीवितम् १,६।

भावनया अन्यथालंकाराणां विस्तरेण वर्णनस्य विसंगति- स्यात्। अतो नालंकारविरोधे तात्पर्यं मम्मटस्य अपितु रसस्यालंकारत्वं खण्ड्यते। यतो हि अलंकारत्वे रसस्य चित्रत्व स्याद्, अलंकारस्य चित्ररूपत्वात्। अतो वाच्योपस्कारकदशायामपि मम्मटो रसस्य गुणीभूतव्यंग्य-त्वमेव मनुते, न कथमप्यलंकारताम्। अतएव तेन न रसवदलंकारोऽलंकारेषु गणित अपितु गुणीभूतव्यंग्यस्य भेदे अपराङ्गत्वे एव। केवलं गुणीभूतव्यंग्य-निरूपणोपसंहारे रसवदाद्यलंकाराणां चर्चैव विहिता। यथा–

'एते च रसवदाद्यलंकाराः। यद्यपि भावोदयभावसन्धि-भाव-शबलत्वानि नालंकारतया उक्तानि, तथापि कश्चिद्-ब्रूयादित्येवमुक्तम्।'[1]

यद्यपि मम्मटो ध्वनिपरंपरापोषक तथापि रसालंकारयोः प्राधान्या प्राधान्यविषये नाय ध्वनिकारमनुवर्तते। ध्वनिकारेण स्पष्टमेव रसस्य लंकारताभ्युपगता।

यथा—

प्रधानेऽन्यत्र वाक्यार्थे यत्रांगं तु रसादयः।
काव्ये तस्मिन्नलंकारो रसादिरिति मे मतिः॥[2]

किन्तु नैव मम्मटेनाभ्युपगम्यते, अपितु गुणीभूतव्यंग्यत्वेनैव तदगी-करोति। मम्मटो न कदापि रसस्यालंकारताम् स्तौति, कामं भवतु स वाच्यस्योपस्कारकोऽपि। 'अंगत्वे रसोऽलंकारः, अंगित्वे च ध्वनि' इति व्यवस्था अलंकारप्राधान्यवादिनाम् प्राचामालंकारिकाणाम् मतमिदमंगतोऽ लंकाराणामलंकारत्वमेव समर्थयति, न कथमप्यलंकारत्वेऽपि सर्वांशरूपेणो पस्कार्यपस्कार्योभयरूपत्वेन वा प्राच्यालंकारिकवत्। यथा—'तदित्थम् त्रिविधमपि प्रतीयमानमनलंकारतया प्रख्यापितं। तदेवमलंकारा एव काव्ये-प्रधानमिति प्राच्यानां मतम्।'[3] अलंकारसर्वस्वकारो रसस्यालंकारताम् समर्थयन् ध्वनिकारदर्शितदिशमेवानुसरति। तेन ध्वनिसंप्रदायेऽपि अलंकारस्य माहात्म्यं नैव हीयते, प्रत्युत ध्वनित्वेन व्यंग्यप्राधान्येन वा स रसेन सह साम्यं भजते। तत्रापि रसध्वनेरेव प्राधान्यं वस्त्वलंकारध्वन्यपेक्षया इत्यन्यद्

---

१. काव्यप्रकाश, पृ ५४५। २ ध्वन्यालोक. २ ५।
६. अलंकारसर्वस्वम् पृ० ६७।

एतत्। ध्वनिकारस्य नात्र विशेषाग्रहः। अलंकाराकरे मग्नस्य ध्वनेरेव प्रकाशनार्थं प्रवर्तमानत्वात्। अन्यैरपि लोचनादिभिः रसध्वनेः प्राधान्यसमर्थनव्याजेन तथैव समर्थितत्वात्। दर्पणकारेण विश्वनाथेन काव्यलक्षणप्रसंगे ध्वनेः काव्यात्मत्वखण्डनपुरःसरं रसध्वनेरात्मत्वं समर्थयता रसालंकारयोर्विवादे रसस्यैव प्राधान्यं समर्थितमलंकारापेक्षया। किन्तु विश्वनाथस्यापि काव्यलक्षणं खण्डितम् पण्डितराजेन ध्वनिसमर्थनव्याजेन। अलंकाराणां समता रसेन सह समर्थिता तेन गुणीभूतव्यंग्यत्वेन।

रीतिवक्रोक्तिप्रस्थानयोस्तु अलंकारस्य प्रतिष्ठाऽक्षुण्णैव। औचित्यप्रस्थानेऽपि ध्वनिविरोधव्याजेन अलंकारप्रतिष्ठैव प्रकारान्तरेण समर्थ्यते। ध्वनिविरोधिपरम्परायां पुनः अलंकारसमर्थनं विहाय नान्यत्किमपि सभाव्यते। आनन्दवर्धनोऽलंकारस्य प्राधान्यं निराकृत्य तत्स्थाने ध्वनिं स्थापयामास। अत एव तेन समग्रमलंकारप्रस्थानं समालोडितम्। तेन च त्रिविधो वस्त्वलंकाररसात्मको ध्वनिर्निरूपितः। गुणीभूतव्यंग्यस्याप्राधान्यादलंकाररूप एव व्यंग्यप्राधान्ये ध्वनित्वमस्यैव स्वीकारात्। इत्थं ध्वनिकारा अलंकारप्रस्थानत्रैविध्यं प्रकटयन्ति। यतो हि येभ्यो विशिष्टेभ्यो अलंकारस्रोतेभ्यो व्यंग्यप्राधान्यध्वनिरुद्धृतः, तान्येव स्रोतांसि पूर्वं त्रिधारारूपेण प्रस्थानाभिधया वा प्रसिद्धान्यासन्।

यद्यपि कुन्तको न मनुते स्वभावोक्तिरसोक्त्योरलंकारताम्, तथापि वक्रताया मार्गभेदव्याजेन तयोरप्यलंकारताम् सूचयत्येव। वक्रतायाः अलंकृतिरूपत्वात् तद्भेदस्यापि तथात्वेनैव स्वीकारौचित्यात्। इत्थमविच्छिन्नकाव्यव्यवहारदृष्ट्या अलंकाराणां महत्त्वं सिद्धम्।

शरीरभूतौ शब्दार्थौ तद्मूलकावलंकारौ वा न कथमपि काव्यस्यात्मत्वं प्राप्नुतः, देहात्मनो भेदेनावस्थानात्। अतोऽलंकाराणाम् न कथमपि प्रतिष्ठा। ते केवलमंगभूताः 'उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्'[1] इत्यादिनिर्देशात्। प्रतिष्ठासिद्ध्यै त्वलंकाराणामात्मत्वस्थापनमावश्यकम्। यतः सर्वाण्येव तत्त्वानि यानि प्रतिष्ठां प्रापुस्तेषामात्मत्वमनिवार्यतया स्वीकृतं प्रस्थानप्रवर्तकैः तत्र तत्र यथा—'रीतिरात्मा काव्यस्य'[2] वक्रोक्तिः काव्यजीवितम्'[3] 'काव्यस्य आत्मा ध्वनिः'[4] 'औचित्यं काव्यजीवितम्'[5]

१ काव्य प्रकाश ८.६७। २. वामन १.२.६।
३. साहित्यदर्पणः, पृ० १४ (लक्ष्मी टीका)। ४ ध्वन्यालोक १.१।
५. औचित्यविचारचर्चा, कारिका ५।

इत्यादय. सत्यप्येवं अलंकारप्रतिष्ठायाः महत्त्वाभावो न शक्यः, पूर्वमलंकाराणां आलंकारिकैः तत्समर्थनात् । यदि चात्मत्व प्रस्थानता-स्थापनेऽनिवार्यमुच्यते, तदा तु रीतिवक्रोक्त्योरपि प्रस्थानत्वे विवाद आपतेत्, तयोरपि काव्यशरीरत्वेनावस्थानात्, रीते केवलं पदसंघट्टनारूपत्वेन वक्रोक्तेश्च शब्दार्थरूपतयैव स्वीकारात् । रीतिवक्रोक्त्योः प्रतिष्ठायाः समर्थकैरालंकारिकैः यदि तत्र शब्दार्थापेक्षाया वैशिष्ट्यमुपन्यस्य तयोः प्रामुख्यमभ्युपगम्यते, तदालंकारप्रस्थानविषयेऽपि तथैव सुवचत्वात् । यथा शरीरमात्मानं विना शवं शवमात्रं, एवमेव शरीरं विना आत्मापि व्यर्थो, नात्माभिव्यञ्जने समर्थः, शरीरद्वारैरेव तस्य अभिव्यञ्जकत्वात् । एवमेव काव्यशरीरभूतयोः शब्दार्थयो. साहाय्येन व्यञ्जना रसादीनामभिव्यक्तिः । इत्थं काव्यशास्त्रे उभयोरप्यनयो वाच्यप्रतीयमानरूपयोरर्थयोः आत्मत्वमधिकृतम् । अत एव ध्वनिकारोऽपि "वाच्यप्रतीयमानाख्यौ तस्य भेदौ उभौ स्मृतौ" इति अंगीचक्रे ।

तस्य तु इद यदेतावेव शब्दार्थौ भेदोपस्य आत्मत्वविचारस्य मूलम् । एतयोः शरीररूपताया त्रीणि अलंकार-रीति-वक्रोक्तिप्रभृतीनि प्रस्थानानि । शरीरिरूपताया च शिष्टानि त्रीणि ध्वनिरसौचित्याख्यानि । अलंकारस्य अवान्तरप्रस्थानानामपि आत्मत्वेन प्रतिष्ठानस्य पुनर्निर्बाधम् ।

संस्कृतसमालोचकास्तदेव वाक्यं काव्यं मन्वते, यत्र भवति रमणीयता, सौन्दर्यविच्छित्तिर्वा । एषैव रमणीयता भवति व्यावर्तिका काव्यस्यान्यस्मात् लौकिकात् शास्त्रीयाद् वा वाक्यात् । शास्त्रीयेषुवाक्येषु न चकास्ति तत्सौन्दर्यं यत् स्वभावत. समुल्लसति काव्यवाक्येषु । लौकिकवाक्येष्वपि त एव भावा विचाराश्च व्यज्यन्ते विविधैर्वाक्यैः, तथापि न भवति सा रमणीयता या चेतश्चमत्कारमाऽऽवहति स्वभावतः सर्वाः रूक्षताः दुरूहता. अन्याश्चाशेषान् देशकालोद्भवान् विविधान् दोषान् निहन्ति, ये किल भावानाम् विचाराणाम् च सुगमतामवरुन्धन्ति ।

वाक्यैरेव शास्त्रकारा अपि भावान् विचारान् वा बोधयन्ति, किन्तु तेषां तानि रमणीयतापादकतत्त्वविरहितानि वाक्यानि न भवन्ति समर्थानि सुखेन भावानामवगमने सर्वेषाम् । काव्यस्वरूपनिष्पत्तये वस्तुनो विशिष्टं वक्रोक्त्या रीत्या वा किञ्चित् आस्वन्दिन वर्णनं अपेक्षितं भवति अन्यथा वार्तैव भवेद्, सा या लोकवार्ता शास्त्रवार्ता वा कथ्यते । यथा प्रथम भामहकृता वार्ताचर्चा विचारयन्तु—

"गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिण. ।
इत्येवमादि किं काव्यं वार्तामेनां प्रचक्षते ॥" [१]

अत्र श्लोकस्य पूर्वांशं भामहो वार्तामेव मनुते न काव्यम्, यतो हि वार्ता समुदायाभिधानात्मिका एव भवति । तत्र केवलं तत्त्वार्थकथनमात्र वस्तुनो निर्विशेषरूपेण वर्णनं वा भवति । चमत्कारापादकं सौन्दर्यसाधकं वा किमप्यतिशयाधिकं तत्त्वं तत्र नोपलभ्यते । इत्थं वस्तुनस्तत्त्वार्थकथनं वार्ता, अग्राम्यं पुष्टं चेतश्चमत्कारिवर्णनं च काव्यम् । काव्यवाक्येषु अर्थस्य रमणीयता शब्दस्य च मधुरिमा इत्येषा द्विविधा संपत् स्वतः एव नानारूपेण शब्दार्थयोः तिष्ठति । अस्याः शक्तेः सम्पदो वा स्फुरणं जागरणं वा अलंकाराणाम् विन्यासेन जायते । अत्र च कविप्रतिभैव प्राधान्येन प्रथते । कविप्रतिभायाः आनन्त्याद् अनन्तताम् यान्ति अलंकाराः । कविरेभिरलंकारैः भूषयति वाक्यानि । अतो वाक्यस्याः शब्दा अर्था वा त्यजन्ति रूढिप्रसूत ग्राम्यं समुदायात्मकं प्रयोगप्रवाहपतितम् कालेनार्जितं च संस्कारं वार्तात्मकं शास्त्रीयात्मकं वा, गृह्णन्ति च सर्वथा नवीनां व्यावर्तिकां वैयक्तिकीमाकर्षिका स्वभावोपेतां वक्रतया रसेन वा रीत्या वा आप्लुतामद्भुतां शक्ति शब्दार्थयोः । अत एव तैरेवालपितैः शब्दैः अभिलपितैश्चार्थैः कविः मोहयति जगत् । यथा—

यानेव शब्दान् वयमालपामः यानेव चार्थान्वयमुल्लिखामः ।
तैरेव विन्यासविशेषभव्यैः संमोहयन्तः कवयो जयन्ति ॥[२]

अनेन अलंकारस्य प्रतिष्ठा, विषयता प्रभावश्च अक्षुण्ण एव ।

---

१. भामह. २.८७ ।
२. शिवलीलार्णवः १.१४ ।

## अलंकार-लक्षणम्

अलम् उपपदपूर्वके कृधातौ घञ् प्रत्यययोगादलंकारशब्दस्य व्युत्पत्तिः। 'घञ्प्रत्ययश्च भावकरणयोरिति' अलंकरणमलंकृतिर्वेत्यस्य प्रथमोऽर्थः। 'अलंक्रियते अनेनेत्यलंकारः' इति करणव्युत्पत्तिबलात् च अलंकरणसाधनमित्यस्य द्वितीयोऽर्थः। करणप्रधानव्युत्पत्त्या अलंकारशब्दः शरीरसुषमाधायकत्वेन हारादीनामिव काव्यशोभासंपादकत्वेन अनुप्रासोपमादीनामलंकाराणां वाचकः।

अलंकृतिरलंकरणं वा अलंकारः इति भावप्रधानोऽलंकारशब्दः साहित्यशास्त्रस्य साक्षात् सौन्दर्यस्य सर्वेषाञ्च सौन्दर्याधायकतत्त्वानां वा वाचकः। अलंकारस्य प्रथमं लक्षणमाह दण्डी—काव्यशोभाकरान्धर्मानलंकारान् प्रचक्षते[2] एतल्लक्षणानुसारं काव्यस्य सर्वे शोभाकारिणो धर्माः गुणरसरीत्यादयोऽलंकारशब्दवाच्याः स्युः। अस्य समर्थनं स्वत एव करोति लक्षणकारो दण्डी—

यच्च संध्यंगवृत्त्यंगलक्षणाद्यागमान्तरे।
व्यावर्णितमिदं चेष्टमलंकारतयैव नः॥[3]

इमामलंकारस्य व्यापकतां वामनः संकोचयति गुणाननलंकारात् पृथक्कृत्य यथा-'काव्यशोभायाः कर्तारो धर्मा गुणाः तदतिशयहेतवस्त्वलंकाराः'।[4] एवं गुणालंकारयोर्भेदो यद्यपि अलंकारस्य व्यापकतां संकोचयति तथापि वामनपूर्ववर्तिनो भामहोद्भटादयो गुणालंकारयोरभेदमंगीकुर्वन्ति। यथा—

'समवायवृत्त्या शौर्यादयः संयोगवृत्त्या तु हारादयः इत्यस्तु गुणालंकाराणाम् भेदः। ओजःप्रभृतीनामनुप्रासोपमादीनां चोभयेषामपि समवायवृत्त्या स्थितिरिति गड्डलिकाप्रवाहेणैवैषाम् भेद इति'।[5]

किन्तु इदं उभयमपि गुणालंकारविषयकं मतं नाभिमतं मम्मटभट्टादीनाम्। एते मतद्वयमपाकुर्वन्ति। तत्र वामनमतस्य 'यदप्युक्तं; तदपि न

---

१. घञि च भावकरणयोः -अष्टाध्यायी ६.४.२०।
२ दण्डी-काव्यादर्शः २ १।　　३. काव्यादर्श. २.३६७।
४. वामन-काव्यसूत्रवृत्ति ३. १,२।
५. काव्यप्रकाशः, ८ पृष्ठ. ४७० (वामनी)।

युक्तम्'[1] इति भामहोद्भटादीनां च 'इत्यभिधानमसद्'[2] इति उद्धरणेन च। सम्प्रति मम्मटभट्टानां अलंकारलक्षणं प्रस्तूयते—

उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।
हारादिवदलंकारास्तेऽनुप्रासोपमादयः॥[3]

ये धर्मा अंगद्वारेण अंगिनो रसस्यांगभूतौ शब्दार्थौ तदतिशयाधानमुखेन तमंगिनं रस सन्तं कदाचित्, न तु नियमेनेति यावत्, उत्कर्षयन्ति ते धर्माः अनुप्रासोपमादयः अलंकाराः। तत्र शब्दद्वारेण अनुप्रासादयः, अर्थद्वारेण उपमादयश्च। यथा—कण्ठाद्यंगोत्कर्षद्वारेण शरीरिणोऽप्युपकारका, हारादयोऽलंकाराः।

एते अलंकाराः यत्र रसस्य संभवस्तत्र तमुपकुर्वन्ति, यत्र तु रसस्य अभाव, तत्र ते वैचित्र्यमात्रपर्यवसिता। यथा हारादयोऽपि कामिनीसौन्दर्ये सति तदंगानामुत्कर्षका, कुरूपांगे तु दृष्टिवैचित्र्यमात्रहेतव।

अत्र लक्षणेऽङ्गद्वारेणेति रसधर्मत्वमलंकाराणां निरस्तम्। अनेन रसावृत्तित्वं चलस्थितित्वं च अलंकाराणाम्। एवं चालंकारा रसं विना अवतिष्ठन्ते, अवश्यञ्च नोपकुर्वन्ति, न वा रसम् साक्षात् किंतु अंगद्वारेणेति गुणेभ्यो विलक्षणा। अत फलितमलंकारलक्षणं-'रसोपकारकत्वे सति तदवृत्तित्वम्। तथात्वे सति रसानियतस्थितिकत्वं, अनियमेन रसोपकारत्वञ्चेति त्रितयम्'[4] काव्यालंकारस्य लक्षणम्। कुवलयानन्दचन्द्रिकायान्तु 'रसादिव्यंग्यभिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या विषयितासंबंधावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वम् अनुप्रासादिविशिष्टशब्दज्ञानादुपमादिविशिष्टार्थज्ञानात् च चमत्कारोदयात् तेषु लक्षणसमन्वय। शब्दार्थयोर्ज्ञाननिष्ठचमत्कृतिजनकतायां विषयितावच्छेदकत्वे तद्विशेषणभूतानुप्रासोपमादेस्तन्निष्ठावच्छेदकत्वात्। रसाद्यलंकारसंग्रहाय व्यंग्योपमादिवारणाय च भेदद्वयगर्भं सत्यन्तोपादानम्'[5] इत्युक्तम्।

---

१. काव्यप्रकाश ८, पृ० ४७० (वामनी)।
२. काव्यप्रकाश ८, पृ० ४७०। ३. काव्यप्रकाश. ८, पृ० ४७०।
४. काव्यप्रकाश. (वामनी) ८, पृ० ४६६।
५. काव्यप्रकाश. (वामनी) ८ पृ० ४६६।

एवमिदं काव्यालंकारलक्षणं प्राधान्यतो ध्वनिमतमनुरुध्यैव कुवलयानन्दचन्द्रिकायां कृतं तस्यैव काव्यशास्त्रेऽभिमतत्वात्। अत एव मयापि तदेव काव्यप्रकाशस्थोऽत्र (वामनीटीकातः) समुद्धृतम्। इदमेव नवीन ध्वनिसम्मतमलंकारलक्षणं अस्माकं प्रबन्धविषयमुपकरोति। ध्वनिस्वीकार एव रसगुणालंकाराणां प्रातिस्विकयां व्यवस्थितौ सम्पन्नायामलंकारप्रस्थानत्रैविध्यसंभवात्। तत्र स्वभावोक्तिप्रस्थाने गुणानां प्रभावो रसोक्तौ रसानां वक्रोक्तौ तु अलंकाराणां प्रभावः स्फुट एव। ध्वनिमते गुणरसयोरलंकारतायामापतति विरोधः, अलंकार्यत्वेनैतयोरभ्युपगतत्वात्। किन्तु ध्वनिकारेणान्यत्रांगदशायां रसस्यालंकारत्वेऽङ्गीकृतेऽपीति विवादः। ध्वनिकारेण स्वत एव एष प्रश्नः पूर्वपक्षत्वेन समुपन्यस्य समाहितः। यथा—यत्र च रसस्य वाच्यार्थीभावस्तत्र कथमलंकारत्वम्। अलंकारो हि चारुत्वहेतुः प्रसिद्धः नात्मात्मनैवात्मनश्चारुत्वहेतुः।[1]

प्रधानेऽन्यत्र वाक्यार्थे यत्रांगं तु रसादयः।
काव्ये तस्मिन्नलंकारो रसादिरिति मे मतिः॥[2]

ध्वनिकारस्यैव मतं प्रायः सर्वे मम्मटविश्वनाथपंडितराजादयः आलंकारिकाः समर्थयन्ति यथा—

रसभावतदाभासभावशान्त्यादिरक्रमः।
भिन्नो रसाद्यलंकारादलंकार्यतया स्थितः॥[3]

'काव्यात्मनो व्यंग्यस्य रमणीयता प्रयोजका अलंकाराः।[4]

अत्र यदि रसानामंगत्वेऽलंकारताभिमता ध्वनिवादिनां तर्हि तद्धर्मभूतानां गुणानां अपि विशेषस्थितौ न कापि अनुपपत्तिः। अलंकारवादिनां प्राचीनानां नये तु सर्वेषाम् एव तत्त्वानामलंकारताभ्युपगतैव।

---

१. ध्वन्यालोक २.५ (वृत्ति)।
२. ध्वन्यालोक २.५।  ३. काव्यप्रकाश:४.२६।
४. रसगंगाधर।

# अलंकारविकाशः

अलंकारशास्त्रेतिहासस्य अध्ययनेन स्पष्टमिदं यदलंकाराणां विकाशवर्गीकरणयोः आधारो भित्तिर्वा अलंकार-प्रतिष्ठाया. प्रसार एव । दृष्टिभेदादलंकारेषु वर्द्धमानो भेदोऽलंकारस्य विकाशवर्गीकरणयो. प्रयोजकः । अतो विकाशवर्गीकरणाववोधाय प्रस्थानपरिज्ञानं नितरां आवश्यकम् । प्रस्थानानामवान्तरभेदोऽपि विकाशवर्गीकरणयोः सहायकः । अत इतिहासाधारेण प्रस्थानपुरःसरमासकालिकक्रमेण अलंकारविकाशवर्गीकरणमावश्यकम् ।

प्रथमं समयदृष्ट्यालंकारप्रस्थानानि त्रिधा-प्राचीनमध्यनव्यभेदात् । तत्र प्राचीनमपि रसरीत्यलंकारभेदेन त्रिविधम् । प्राचीनेऽलंकारप्राधान्यकाले अलंकारगतार्थमपि रसप्रस्थानं चतुर्णाम् उपमा-रूपक-यमक-दीपकालंकाराणां पूर्वं निर्देशकारित्वाद् निर्दिष्टम् । वस्तुतः प्राचीनप्रस्थानं रीत्यलंकारप्रस्थानभेदेन द्विविधमेव । अस्य प्रस्थानस्य प्रधानाः पोषकाः दण्डी-भामह-भट्ट-उद्भट-रुद्रटादयः आलंकारिकाः यैः खिष्टाब्दीयषट्शतकादारभ्य अष्टमशतकपर्यन्तं ग्रंथाः रचिताः । अत्र प्राधान्येन वर्णिता अलंकाराः। तत्र शब्दालंकाराः-अनुप्रासः, यमकः, गोमूत्रिका, सर्वतोभद्रं, प्रहेलिका आदयश्च । अर्थालंकाराश्च—स्वभावोक्ति, उपमा, प्रतिवस्तूपमा, रूपक, दीपकं, आक्षेपः, अर्थान्तरन्यासः, व्यतिरेकः, विभावना, समासोक्ति, अतिशयोक्तिः, उत्प्रेक्षा, हेतुः, सूक्ष्म, लेश, क्रम, रसवद्, ऊर्जस्वी, तुल्ययोगिता, विरोधाभासः, अप्रस्तुतप्रशंसा, व्याजस्तुति, निदर्शनं निदर्शना वा, सहोक्ति, परिवृत्तिः, आशीः, सकीर्णम्, भाविकम्—इत्यादयो वर्णिताः ।

प्राचीनकाल-प्रस्थानम्—

अस्य प्राचीनप्रस्थानकालस्य आलंकारिका अलंकारप्राधान्यवादिनो नाभ्युपगच्छन्ति । रसध्वन्योः प्राधान्यं, अपि त्वेतावपि अत्रैव अन्तर्भावयन्ति । गुणाश्चापि प्राय एषां मते दत्ता । भामहात् पूर्वोद्भवेभ्यो भरतादिभ्योऽधिगतान् कतिपयानेव यमकोपमारूपकादीनलंकारान् एतत्प्रस्थानमियतीं विपुलां संख्यां प्रापयति । अत्रास्ति कारणं दण्डि-भामह-भट्टोद्भटवामदीनां स्वभावोक्ति-वक्रोक्तिविषयको दृष्टिभेदः ।

मध्यकाल-प्रस्थानम्—

एतत्प्रस्थानं नवमशतकादारभ्य षोडशशतकं यावत् व्याप्नोति । अत्र प्रस्थाने ध्वनेर्व्यञ्जनाया वा उद्भावनायां सत्यामुपेति प्राधान्यमलंकारा-

णाम् । अस्य मुख्यः प्रतिनिधिः ध्वन्यालोककारः आनन्दवर्धनस्तदनुयायिनश्च अभिनवगुप्त-मुकुल-प्रतिहारेन्दुराजादयः । एते प्रायो मध्यकालप्राचीनकालप्रस्थाने समुन्नयन्ति । अतोऽलंकारप्रस्थानदृष्टिरामूलमेति परिवर्तनम् । शास्त्रसंदर्भे चालंकाराणाम् विहितमध्ययनं परिवर्तनं विस्तारयति । फलतोऽत्र प्राचीनप्रस्थानस्य अभिमता बहवो गोमूत्रिका--प्रहेलिकादयोऽलंकारास्त्यज्यन्ते गृह्यन्ते चानेके संकर--संसृष्टिपरिणामोल्लेखादयः । अत्रापि दृष्टिभेद एव विच्छित्तिवैलक्षण्यादलंकारभेदे कारणम् ।

अस्य प्रस्थानस्याभिमता अलंकारा इमे--तत्र शब्दालंकाराः—यमकानुप्रासवक्रोक्तिश्लेषचित्रपुनरुक्तवदाभासादयः । अर्थालंकाराः—उपमाऽनन्वयोपमेयोपमारूपकपरिणामसन्देहभ्रान्तिमानुल्लेखोऽपह्नुतिनिश्चयोत्प्रेक्षातिशयोक्ति-तुल्ययोगिता—दीपक-प्रतिवस्तूपमा--दृष्टान्त-निदर्शना-व्यतिरेक-सहोक्ति-समासोक्तिपरिकर-श्लेषाप्रस्तुतप्रशंसा—व्याजस्तुतिपर्यायोक्तकाव्यलिंगानुमान-हेत्वनुकूला-अर्थापत्ति - विकल्प-समुच्चय-समाधि-प्रत्यनीक-प्रतीप-मीलित-सामान्य - तद्गुणातद्गुण – सूक्ष्म व्याजोक्ति-स्वभावोक्ति-भाविकोदात्त-रसवदलंकार संसृष्टि-संकराभिधाः । अत्र प्रस्थाने त्रय एव माधुर्यौजःप्रसादाख्याः गुणाः न दश प्राचीनप्रस्थानवत् । एवं स्पष्टमेवास्य भेदः प्राचीनात् । अत एवालंकारेष्वपि दृश्यते महान् भेदः ।

मध्यकाल-प्रस्थानम्—

इदं चान्तिमं महत्वपूर्णं प्रस्थानम् । सप्तदशशताब्देरुत्तरार्धादारभ्य एकोनविंशतिशतकोत्तरार्धपर्यन्तं व्याप्तमिदं प्रस्थानम् । अस्य मूर्धन्यो निबन्धको न्यायादिशास्त्रनिष्णातः पंडितराजो जगन्नाथः । अयं नव्यन्यायदृष्ट्या समस्तमेव अलंकाराणांवमामध्य अलंकारमणिमुद्दधार, जहार च गुणवतामालंकारिकाणां हृदयमधिरुह्यमन्तर्ध्वान्तम् । व्यंग्यस्य रमणीयताप्रयोजिकया स्वालंकारदृष्ट्या पंडितराजो दश नवीनालंकारानुद्भाव्य मध्यकालप्रस्थानाभिमतं रयैः द्विसप्त्यलंकारैः सह संकलनया अलंकाराणां संख्यां द्विनवतिं प्रापयामास । अस्य प्रस्थानस्यान्ये मुख्यतः समर्थका बभूवुः केशवमिश्राः अलंकारशेखरकाराः, अलंकारकौस्तुभकाराः विश्वेश्वरादयश्च । अस्य प्रस्थानस्यालंकारदृष्टिः ध्वनेः स्वीकारेण रमणीयतायाश्चाभ्युपगमेन अतीव संगता । नव्यन्यायदृष्ट्या अलंकारपरीक्षणेन अलंकारदृष्टौ अगाधता

सूक्ष्मता चायाता। अत एवेदं प्रस्थानं पूर्वप्रस्थानापेक्षया अधिकमभिमतमा-लंकारिकाणाम्।

अनेन प्रस्थानेनोद्भाविता उद्धृता वा अलंकारा दश। यथा—
(१) प्रौढोक्तिः (२) ललितम् (३) प्रहर्षणम् (४) विषादः (५) उल्लासः (६) अवज्ञा (७) अनुज्ञा (८) तिरस्कारः (९) लेशः (१०) असम इत्याख्याः।

एते प्रायः सर्वं एवालकारा प्रदीपोद्योतादि-टीकाकारैः मम्मटाभिमतेष्वेव अलंकारेष्वन्तर्भाविताः। यथा—प्रौढोक्तिरतिशयोक्तौ काव्यलिंगे चोल्लासः। अवज्ञाविषादालकारौ च विषमालकारे। एवं दृष्टिभेदेन अलंकाराणां जायते विकासः। अत्र प्रस्थानानां प्रभाव एवाधिकं प्रथते। अत एव वयमलकारविकासे प्रस्थानानुसारं भेदं पश्यामः।

यथा यथा विवर्धन्ते प्रस्थानानि, भवति च नव्यन्यायादिशास्त्राणां प्रयोगोऽलंकाराणां विवेचने, तथा तथा अलंकाराणां संख्यायां नाम्नि स्वरूपे च जायते विकासः। यथा—भरतनाट्यशास्त्रे उपमा-दीपक-रूपक-यमकेति चत्वार एव अलंकाराः। किन्तु उत्तरोत्तरं प्रस्थानप्रभावितेन आलंकारिकाणां दृष्टिभेदेन वर्धन्तेऽलंकाराः। अत एव दण्डिना काव्यादर्शे पञ्चत्रिंशदलंकाराः, भामहेन एकोनचत्वारिंशत्, उद्भटेन द्विपञ्चाशत्, मम्मटेन काव्यप्रकाशे सप्तषष्टिः (एषु षट् शब्दालंकाराः), चन्द्रालोके शतम्, कुवलयानन्दे च चतुर्विंशत्यधिकशतमलंकारा वर्णिताः। अलंकाराणां नाम्नि भेदस्तु अल्प एव। यथा-स्वाभावोक्तिः स्वभावनाम्ना जात्याख्यया वा व्यपदिष्टा। एवमेव यथासंख्यालंकारोऽपि क्रमाभिधया व्यपदिष्टः। अलंकाराणां स्वरूपे तु अधिकं परिवर्तनम्। अत्र विस्तरभिया विकासोपबृंहणार्थं संकेत एव क्रियते। यथा समासोक्तिः—

उपमेयस्यानुक्तौ समानवस्तुन्यासः समासोक्तिः।[1]
समासोक्तिः समैर्यत्र कार्यलिंगविशेषणैः।
व्यवहारसमारोपः प्रकृतेऽन्यस्य वस्तुनः॥[2]

---

१. वामन ३.३.३। २. साहित्यदर्पण १०.५६।

अथानयोः प्राचीननवीनलक्षणयोः महान् भेदः । यत्र प्राचीने वस्तुनि वस्तुनो न्यासः स्वीकृतः, किन्तु नवीने वस्तुनो व्यवहारे व्यवहार-समारोपः । अत्र नवीनमेव लक्षणं संगतं, अन्यथा रूपकेऽतिव्याप्तिर्दुर्वारा । अत एव उद्योतकारोऽपि समच्छते । यथा—

'रूपके विशेष्ये प्रकृतरूपारोपः । समासोक्तौ तु प्रकृतव्यवहारे अप्रकृतव्यवहारारोपः ।'[1]

एवं प्राचीननवीनदृष्टिभेदेनालंकारस्वरूपे पर्याप्तो विकासः प्रतीयते।

अत्रालंकाराणां विकासस्य प्रधानं कारणमलंकारप्रस्थानस्य धारा-न्तरास्त्रिविधाः —स्वभावोक्ति–वक्रोक्ति–रसोक्त्याख्या धाराः, तासां निरूपणार्थं प्रयासः विपश्चिद्भिः कृतः । अत्रालंकाराणां विकासप्रदर्शनेन तासां धाराणां संकेत एव कृतः, विस्तरस्तु तासामत्र न समीचीनः ।

भामहो हेतु–सूक्ष्म–लेशान् वक्रोक्त्यभावादलंकारान् न मनुते । किन्तु दण्डी सर्वानेतान् उत्तमभूषणत्वेनांगीकृत्य अलंकारान् विकासयति । यथा—

हेतुः सूक्ष्मोऽथ लेशश्च नालंकारतया मतः ।
समुदायाभिधानस्य वक्रोक्त्यनभिधानतः ॥[2]

हेतुश्च सूक्ष्मलेशौ च वाचामुत्तमभूषणम् ।
कारकज्ञापकौ हेतू तौ चानेकविधौ यथा ॥[3]

एवं नव्यशास्त्रादिसहकृतात् अलंकारप्रस्थानपरिशीलनाद् अधिगतालंकार–बीजानाम् ऋजुकुटिलनानापथजुषामालंकारिकाणां दृष्टिभेदेन विकसिता अलंकाराः । दण्डी तु अलंकाराणां बहुधा विकल्प्यमानानां वचनस्यासंभावता काठिन्यं वा शंसति । यथा—

---

१. प्र० उद्यो० पृष्ठ ४७७ ।
२. भामह, काव्यालंकार २.८६ । ३. दण्डी काव्या० २.२३५ ।

'ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति ।'[1]

ध्वन्यालोकेऽपीदमेव समर्थ्यते—

सहस्रशो हि महात्मभिरन्यैरलंकाराः प्रकाशिताः, प्रकाश्यन्ते च । वाग्विकल्पानामानन्त्यात् ।[2]

अतो मेधाविनां कल्पनायाः कदापि विरमाभावात् कल्पनाप्रभविणामलंकाराणामियत्तया परिच्छिद्य निरूपणमसंभवम् । अत्र त्वलंकारग्रन्थानाश्रित्य विकाशो दर्शितः ।

---

१. दण्डी, काव्या० २.१ ।
२. ध्वन्यालोक (लोचन०) पृ० २६



# अलंकाराणां वर्गीकरणम्

सर्वेषामलंकारग्रंथानां पर्यालोचनया विदितं यदलंकाराः पूर्वं शब्दार्थयोर्भेदेन विभक्ताः। ततः क्रमशः तृतीयोऽपि भेदः शब्दार्थोभयभेदरूपेण स्वीकृतः। पूर्वमेतेषाम् विभागानामाधारो बभूव आश्रयाश्रयिभावः, किन्तु मम्मटादिभिरस्य निराकरणं कृत्वा अन्वयव्यतिरेकाभ्यामेव अलंकारभेदव्यवस्था शब्दार्थोभयरूपिणी स्वीकृता। एष त्रिविधो विभागोऽतीव स्थूलः, आलंकारिकाणामत्र न वर्ततेऽधिकं वैमत्यम्। वक्रोक्तिश्लेषादयः कतिपयाः सन्ति ईदृशा अलंकाराः यत्र शब्दार्थयोर्भेदे वर्धते विवादः। शिष्टानामन्येषा अलंकाराणाम् भेदस्तु शब्दार्थोभयभेदकृतौ न तथा विवादं भजते। केवल भोजस्यैव भेदः सर्वथा नव्यः। भोजात् पूर्वं स्वीकृता शब्दार्थोभयभेदकृता व्यवस्था। भोजो द्विसप्ततिरलंकारान् मनुते यत्र चतुर्विंशतिः अलंकाराः शब्दगताः, शिष्टे च द्वे चतुर्विंशती अर्थशब्दार्थोभयगताश्च। एष विभागः सर्वथा नवीनेन न केनापि आलंकारिकेण अंगीकृतः। एवमेते स्थूलाः विभागाः न मनोवैज्ञानिकता मावहन्ति अलंकाराणां चित्तवृत्तिरूपत्वात्, स्थूले चात्र विभागे तस्या अदर्शनात्।

प्रथमं भामहोऽलंकृतीनामेकां वक्रोक्तिमेव भेदिकां मनुते शब्दार्थभेदस्य तदाभावात्। स इमां स्वभावोक्तिवक्रोक्तिभेदेन द्विधा विभजते, तथाप्याग्रहो वक्रोक्तावेव। अत एव स्वभावोक्तिमूलकान् हेतु-सूक्ष्म लेशादीन् अलंकारान् नायं सहते, तत्र वक्रोक्तेरभावात्। अतोऽस्य दृष्ट्या सर्वे अलंकाराः वक्रोक्तिमूलका एव। परं दण्डी नेदं सहते। स स्वभावोक्तिवक्रोक्तिभेदेन भिन्न द्विविधं काव्यवाङ्मयमंगीकृत्य अलंकारान् द्विधा विभजते। इममेव वैज्ञानिकक्रमं कालान्तरेण स्वीकृत्य भोजोऽपि काव्यवाङ्मयं स्वभावोक्ति-वक्रोक्ति-रसोक्तिभेदेन त्रिधा विभज्य त्रिविधं वर्गीकरणमंगीकरोति अलंकाराणाम्।

किन्तु एतान् त्रीन् आलंकारिकान् विहाय न केनाप्यन्येनात्र कृतोऽधिकायासो येनैषा विशिष्टा मनोवैज्ञानिकी पद्धतिः अग्रेऽस्तं याति। मम्मटसदृशः आलंकारिकमूर्धन्योऽपि वर्गनिर्देशम् विनैव अलंकारान् विवृणुते।

दण्डिभोजयोः परस्तादपि भवन्ति प्रयासा अलंकाराणां वर्गीकरणस्य पर मत्र दृष्टिभेदात् भिद्यन्ते आधाराः ।

प्रथमं भट्टोद्भट एव काव्यालंकारसारसंग्रहे वर्गीकरणाय प्रयतते । स स्वाभिमतान् चत्वारिंशदलंकारान् षोढा विभजते ।

तत्र प्रथमवर्गस्यालंकाराः—पुनरुक्तवदाभास-छेकानुप्रास त्रिविधा-वृत्ति-(परुषा-कोमला-उपनागरिका) लाटानुप्रासो-पमा-त्रिविधदीपक-(आदि-मध्यान्तभेदेन)-प्रतिवस्तूपमा इत्यभिधाः ।

द्वितीय-वर्गस्यालंकाराः—आक्षेप-अर्थान्तरन्यासव्यतिरेक-विभावना-समासोक्ति-अतिशयोक्तयः ।

तृतीय-वर्गस्यालंकाराः—यथासंख्योत्प्रेक्षा-स्वभावोक्तयः इत्याख्याः ।

चतुर्थ-वर्गस्यालंकाराः—प्रेय-रसवद्-ऊर्जस्वि-पर्यायोक्त-समाहिता-भिधाः ।

पञ्चम-वर्गस्यालंकाराः—अपह्नुति-विशेषोक्ति-विरोध-तुल्ययो-गिता-अप्रस्तुतप्रशंसा-व्याजस्तुति-निदर्शनोपमेयोपमा-सहोक्ति-संकर-परिवृत्तिरिति ।

षष्ठ-वर्गस्यालंकाराः—अनन्वय-संदेह-संसृष्टि-भाविक-काव्यलिंग-दृष्टान्ताः ।

किन्तु एतेषु चतुर्थ-वर्ग एव संगतः प्रतिभाति । शिष्टेषु वर्गेषु न किमपि एतावद् व्यावर्तकम् भेदकं तत्त्वमुपलभ्यते, यदाश्रित्यान्यवर्गा स्वतन्त्रसत्तामादधुः । चतुर्थवर्गेऽपि प्रेय-रसवद्-ऊर्जस्वि-समाहित इति एतेषां स्थापनं संगतिं भजते । उदात्तपर्यायोक्तयोरपि यथाकथञ्चित् व्यंग्यत्वेन विषयसाम्यात् स्थापनं भवेत् क्षम्यम् । किन्तु श्लेषस्य तत्र स्थिति-स्तु न कथमपि समर्थनं सहते ।

अतः परं रुद्रटस्य वर्गीकरणं अधिकं सफलं यतो अत्रत्याः वर्गा प्रायो वैज्ञानिकाधारमाहिताः । अनेन अर्थालंकाराः चतुर्धा विभक्ताः । तद्यथा—(१) वास्तवम् (२) औपम्यम् (३) अतिशयः (४) श्लेषश्च । वस्तुस्वरूपकथनं वास्तवम् । अत्र सहोक्तिसमुच्चयादयोऽलंकाराः । उपमेयोप-मानभाव औपम्यं । उपमोत्प्रेक्षारूपकादयोऽलंकारास्त्र गृह्यन्ते । प्रसिद्धिविरो-

दोऽप्रेक्षादयोऽलङ्कारा अतिशयवर्गे आयान्ति । अनेकार्थनिपाते श्लेष इष्यते । अत्र च श्लेषविरोधविभावनादयोऽलङ्कारा । अनेन केवल अलङ्कारा वर्गद्वये स्थापिता । यथा-उत्तरसमुच्चयौ वास्तववर्गे औपम्यवर्गे च स्त: । एवमेव विशेषाधिकालङ्कारौ श्लेषातिशयौ वर्गयो स्थापितौ, विषमोऽपि वास्तवातिशयवर्गयो स्थापित: ।

अत: परं रुय्यकस्य अलङ्कारसर्वस्वगत वर्गीकरणम् । एकावलिकारो विद्याधर: प्राय इदमेवानुसरति । एकावले: टीकाकारो मल्लिनाथो-ऽनयोरुभयोरपि वर्गीकरणयो नफल ज्ञानकस्य विधाय तत्रैव स्वगतं वर्गीकरणं दर्शितवान् । अतो रुय्यकविद्यानाथयो वर्गीकरणमेव गतार्थं इति इदमेव प्रदर्श्यते । अत्र पूर्वं षोढा प्रधानो विभाग तदनन्तरमनेकेऽवान्तरभेदा: । यथा—

१ सादृश्यमूलको वर्ग —इदमपि सादृश्य द्विविध । भेदाभेदप्रधान अभेदप्रधानञ्च । तत्र भेदप्रधानमपि द्विविध आरोपाध्यवसायभेदात् । तत्र भेदाभेदप्रधानाऽलङ्कारा—उपमा, उपमेयोपमा, अनन्वय स्मरणञ्च ।

अभेदप्रधाना पुन आरोपमूलका —रूपक परिणाम. संदेह, भ्रान्तिमान्, उल्लेख, अपह्नुति, अध्यवसायमूलकौ च द्वौ उत्प्रेक्षातिशयोक्ती ।

२. औपम्यमूलको वर्ग —अत्रापि पदार्थगत-वाक्यार्थगत-भेदप्रधान विशेषणविच्छित्तिक विशेष्यविच्छित्तिक-विशेषणविशेष्यविच्छित्तिकम् चेति षड्विधमौपम्य मदवलम्ब्य षोढा विभाग: गम्यौपम्यमूलकानामलङ्कारा जायते ।

(i) पदार्थगता —दीपकतुल्ययोगिते ।

(ii) वाक्यार्थगता —प्रतिवस्तूपमा-दृष्टान्त-निदर्शना-भिधा ।

(iii) भेदप्रधाना.—सहोक्ति -विनोक्ति -व्यतिरेकश्चेति त्रय ।

(iv) विशेषणविच्छित्तिकौ—समासोक्तिपरिकरौ ।

(v) विशेष्यविच्छित्तिका.—अप्रस्तुतप्रशंसा-अर्थान्तरन्यास -पर्यायोक्त-व्याजस्तुति-आक्षेपा ।

(५) विशेषणविशेष्यविच्छित्तिनिः—श्लेष एव एव ।

३. विरोधमूलको वर्गः—विरोध–विभावना–विशेषोक्ति–अतिशयोक्ति–(कार्यकारणपौर्वापर्यविपर्ययश्च)–अधिक–असङ्गति–विषम–सम–विचित्र–अन्योन्य–विशेष–व्याघाता इत्येतेऽलङ्काराः ।

शुद्धविरोध—विरोध ।

कार्यकारणभावाश्रिता—विभावना–विशेषोक्ति–अतिशयोक्तय ।
असङ्गति–विषम–सम–विचित्र–अधिक–अन्योन्य–विशेष–व्याघाता ।

४. शृंखलामूलको वर्गः—कारणमाला–दीपक–एकावलि–सार मालादीपकानि ।

५. न्यायमूलको वर्गः—तर्को वाक्य लोकश्चेति भेदेन न्यायस्य त्रैविध्यात् न्यायमूलका अपि त्रिविधा । तत्र—

(क) तर्कन्यायमूला—काव्यलिङ्ग-अनुमानश्च ।

(ख) वाक्यन्यायमूला—यथासंख्य-पर्यायपरिवृत्ति-परिसंख्या-अर्थापत्ति–विकल्प–समुच्चय–समाधयश्च ।

(ग) लोकन्यायमूला—प्रत्यनीक प्रतीपमीलित–सामान्य–तद्गुण-अतद्गुण उत्तराश्च ।

६. गूढार्थप्रतीतिमूलको वर्गः—सूक्ष्म–व्याजोक्ति–वक्रोक्ति–स्वभावोक्ति भाविक–उदात्त–रसवद्–प्रेय–ऊर्जस्विसमाहित–भावोदय–भावसंधि भाव शबलता ।

एव षड्वर्गेषु विभक्ता अलङ्कारा अलङ्कारसर्वस्वकारकेण रुय्यकेण ।

विद्यानाथोऽपि पूर्ववर्तिनाम् रुद्रट रुय्यकविद्याधरादीना वर्गीकरणानि आश्रित्य अर्थालङ्कारान् चतुर्धा विभजते—

(१) केचन प्रतीयमानवस्तव ।

(२) केचन प्रतीयमानौपम्याः ।

(३) केचन प्रतीयमानरसभावादय ।

(४) केचन अस्फुटप्रतीयमाना ।

एतेषामेवान्तरविभागा नव विद्यन्ते । यत्राहितोऽयोऽवान्तरवर्गं यथा—

(१) साधर्म्यमूल (अयमपि त्रिधा भेद–अभेद–भेदाभेदभेदात्) ।
(२) अध्यवसायमूल । (३) विरोधमूल ।
(४) वाक्यन्यायमूल । (५) लोकव्यवहारमूल ।
(६) तर्कन्यायमूल । (७) शृंखल वैचित्र्यमूल ।
(८) अपह्नवमूल । (९) विशेषणवैचित्र्यमूलश्चेति ।

प्राय एतान्येव वर्गीकरणानि अनुसृत्य दर्पणकारो विश्वनाथोऽपि विधत्ते वर्गीकरणम् । तथापि स प्राधान्येनालङ्कारसर्वस्वकारमनुवर्तते । यथा—तत्र प्रथममर्थालङ्कारा सप्तधा

(१) सादृश्यगर्भ । (२) विरोधगर्भ ।
(३) शृंखलाबन्ध । (४) तर्कन्यायमूल ।
(५) वाक्यन्यायमूल । (६) लोकन्यायमूल ।
(७) गूढार्थप्रतीतिमूलश्चेति भेदात् ।

१ सादृश्यगर्भ.—सादृश्यगर्भो हि भेदाभेदप्रधान, अभेदप्रधान, औपम्याश्रयश्चेति त्रिधा । तत्र—

(क) भेदाभेदात्मकाश्चत्वार—उपमा—उपमेयोपमा — अनन्वय-स्मरणाश्चेति ।

(ख) अभेदप्रधानारोपाध्यवसायमूलाभ्याम् द्विधा तत्रारोपमूलका — रूपक परिणाम सन्देह भ्रान्तिमदुल्लेखापह्नुत्यभिधा. । अध्यवसायमूलौ—उत्प्रेक्षातिशयोक्त्याख्यौ ।

(ग) गम्यौपम्याश्रय पुन पदार्थगतो वाक्यार्थगतो भेदप्रधानो विशेषणविच्छित्तिको विशेषणविशेष्यविच्छित्तिकश्चेति पञ्चधा । तत्र—

(i) पदार्थगतौ—दीपक, तुल्ययोगिता चेति ।

(ii) वाक्यार्थगता.—प्रतिवस्तूपमा दृष्टान्तनिदर्शनाश्चेति ।

(iii) भेदप्रधाना —व्यतिरेक सहोक्ति विनोक्तिश्चेति ।

(iv) विशेषणविच्छित्तिकौ—समासोक्ति-परिकरश्च ।

(v) विशेषणविशेष्यविच्छित्तिक —श्लेष एव । अप्रस्तुतप्रशंसा-अर्थान्तरन्यास-पर्यायोक्त व्याजस्तुति -आक्षेपश्चेतीमेऽपि ।

(२) विरोधगर्भा —विरोध-विभावना—विशेषोक्ति—अतिशयोक्ति (कार्यकारणविपर्ययरूपा -असंगति-विषम-सम—विचित्र-अधिक-अन्योन्य विशेष व्याघातश्चेत्यभिधा ।

(३) शृङ्खलामूला —कारणमाला-एकावलि —मालादीपक—सार इत्याख्या. ।

(४) तर्कन्यायमूलौ—काव्यलिंग-अनुमानश्चेति ।

(५) वाक्यन्यायमूलाः— यथासंख्य-पर्याय—परिवृत्ति—परिसंख्या-अर्थापत्ति-विकल्प-समुच्चय-समाधिश्चेत्यभिधा ।

(६) लोकन्यायमूला.—प्रत्यनीक-प्रतीप-मीलित-सामान्य तद्गुण अतद्गुण उत्तर इत्याख्या ।

(७) गूढार्थप्रतीतिमूला —सूक्ष्म-व्याजोक्ति, वक्रोक्ति, स्वभावोक्ति भाविक, उदात्त, रसवद्, प्रेय, ऊर्जस्वी, भावोदय, भावशान्ति, भावसन्धि, भावशबलतेत्यभिधाः । तत्संकरमूलौ संसृष्टिसंकरौ ।

अत्र दर्पणकारो निश्चयालङ्कारमधिक अपह्नुतेरनन्तर स्थापयति । व्याजस्तुति. पर्यायोक्त अर्थान्तरन्यास. काव्यलिंग अनुमानश्चेत्याख्यान् अलंकारान् परिभाष्य तेनैव क्रमेण स्थापयति, येन रूपेणात्र वर्गीकरणे ते स्थिता । हेत्वनुमानाभिधौ अलंकारौ साधिकौ आक्षेपानन्तरं स्थापितौ । विभावनाविशेषोक्ती च विरोधस्य पूर्वं स्थापिते । पूर्वं मालादीपक लक्षयति, तत एकावली । उत्तरालंकारञ्च अर्थापत्तेः पूर्वं स्थापयति ।

एवमिदं दर्पणकारपर्यन्तमलङ्काराणां वर्गीकरणम् । नवीन परम्परायां अलङ्काराणाञ्च वर्गीकरणस्य उपस्थापकः पण्डितराजजगन्नाथः अनेन नव्यन्यायदृष्ट्या ध्वनिं निरीक्ष्य अलङ्कारस्य रमणीयता च परीक्ष्य रसालङ्कारयोः रामणीयक समन्वयं साधितो यश्च समस्तस्य नवीनग्रन्थानामाधारभित्तिः । अत एवानेन मध्यकालापेक्षया दश अलङ्कारा अधिकाः स्वीकृताः । ते च यथा– (१) प्रौढोक्तिः (२) ललितम् (३) प्रहर्षणम् (४) विषादनम् (५) उल्लासः (६) अवज्ञा (७) अनुज्ञा (८) लेशः (१०) असनञ्च ।

अलङ्काराणां वर्गीकरणञ्च त्रिविधं कृतम् पण्डितराजेन । १-सादृश्यप्रस्थानम् २–विरोधप्रस्थानम् ३–शृङ्खलाप्रस्थानञ्च । तत्र—

१–सादृश्यप्रस्थानमूलकाः अलङ्काराः–उपमा उपमेयोपमा अनन्वय स्मरण उदाहरण रूपक परिणाम ससन्देह भ्रान्तिमान् उल्लेख अपह्नुति उत्प्रेक्षा अतिशयोक्ति तुल्ययोगिता दीपक प्रतिवस्तूपमा दृष्टान्त निदर्शना व्यतिरेक सहोक्ति विनोक्ति समासोक्ति परिकर श्लेष इत्यादयः एकानविंशत् अलङ्काराः ।

२ विरोधप्रस्थानमूलकाः—विरोध विभावना विशेषोक्ति असङ्गति विषम सम विचित्र अधिक अन्योन्य विशेष व्याघात इत्यभिधा एकादशालङ्काराः ।

(३) शृङ्खलाप्रस्थानमूलकाः–अवशिष्टाश्च कारणमाला एकावलि मालादय अलङ्काराः शृङ्खलाप्रस्थानमूलकाः ।[1]

ए० वी० गजेन्द्रगडकरमहोदयोऽपि काव्यप्रकाशस्य आङ्ग्लभाषीयभूमिकायां अलङ्काराणां वर्गीकरणप्रकरणे सूचितवान् नवीन मनोवैज्ञानिक विभाजन—

१. सादृश्य (Similarity) प्रस्थानमूलकाः—

अत्र सादृश्यमूलकानामलङ्काराणां सङ्ख्या विंशतिः । एतेऽपि सादृश्यस्य भिन्नत्वात् त्रिषु वर्गेषु विभक्ता. । तत्र प्रथमवर्गे सन्ति उपमा उपमे-

---

१ अलङ्कारप्रस्थानविमर्शः पृष्ठ २०४ ।

योपमा अनन्वयश्चेति षट्. । अत्र भेदात्मकं सादृश्यं । द्वितीयवर्गे– सन्देह (द्विकोटिक ज्ञान) उत्प्रेक्षा (उत्कटकोटिक) रूपक (अभेद) अपह्नुति (अपह्नवपूर्वकोऽभेदः) अतिशयोक्ति (अध्यवसान) भ्रान्तिमान् इत्याख्या अलंकारा: । अत्राभेदात्मकं सादृश्यं नानारूपं परिणमति । तृतीयवर्गेऽव-शिष्टा:–प्रतिवस्तूपमा दृष्टान्त. निदर्शना दीपक तुल्ययोगिता समासोक्ति अप्रस्तुतप्रशंसा (पञ्चमी) सामान्य मीलित व्यतिरेक इत्यभिधा अलंकारा। एवमेते सादृश्यप्रस्थानमूलका विंशत्यलंकारा ।

२. विरोधप्रस्थानमूलका.— अत्रापि विरोधस्याभ्यन्तरबाह्यभेदेन द्विविधा भेदमूलकालंकारा. । तत्राभ्यन्तरभेदमूलका —विषम विशेष अधिक व्याघात. इत्यभिधाः । बाह्यविरोधमूलका —अतिशयोक्ति (चतुर्थो भेद ) विभावना विशेषोक्ति असंगति अतद्गुणश्च इत्याख्या ।

३. सानुरूप्य (Contiquity) प्रस्थानमूलकाः—अप्रस्तुतप्रशंसा (प्रथमं प्रकारमारभ्य चतुर्थं यावत्) सूक्ष्म स्मरण इत्याभिधास्त्रय ।

४. शृंखलामूलकाः—मालादीपक कारणमाला सार एकावली इत्याख्या· चत्वारोऽलंकारा ।

५. तर्कन्यायमूलकाः—काव्यलिंगम् अर्थान्तरन्यास अनुमानम् उत्तर (प्रथम. प्रकार.) इत्याख्या ।

६: विविधात्मकः (Miscellaneous)—श्लेष यथासंख्यः स्वभावोक्ति· परिवृत्ति पर्यायश्च अलंकारा न कस्मिन्नपि वर्गे स्थाप्यन्ते, तत्तद् वर्गेषु स्वीकरणस्य वैशिष्टस्यात्रानुपलम्भात् ।

एवं मनोवैज्ञानिक नवीनप्रस्थानमाश्रित्य अलंकाराणां विभागो विहितो ,गजेन्द्रगडकरमहोदयैः । एषोऽपि विभाग अन्यविभागवत् न सर्वथा व्यावृत्त विभाग प्रस्तौति अलंकाराणां, अपितु संश्लिष्टमर्यादिक एवालंकारो वर्गद्वये प्राप्यते । अथ क्रमः प्राचीननवीनप्रस्थानयो अलं-कारविभागे समानः । यत् एक एव अलंकारो रुद्रटादिभिर्भिन्ने वर्गे स्था-पित यथा—सहोक्ति–विषम–हेतूत्तरो उत्प्रेक्षादयो नवअलंकारा वर्गद्वये विनिवेशिता । नैष दोषः, दृष्टिभेदेनास्य समर्थनात् । अतोऽलंकार-विभागे सर्वेदृष्टिभेद प्रधान इत्यवधेयम् । अलंकारस्य प्राचीननवीनप्रस्था-नयो सहभावेन निष्पन्नायामलंकारदृष्टौ सर्वेऽलंकारविवादा विरता· स्यु

# उपमा

१–नवानधोऽधो बृहतः पयोधरान् समूढकर्पूरपरागपाण्डुरम् ।
क्षणं क्षणोत्क्षिप्तगजेन्द्रकृत्तिना स्फुटोपमं भूतिसितेन शम्भुना ॥ १-४

अत्र द्वितीयपादे लुप्तोपमा, स्फुटोपममिति आर्थी समासगता च ।

२–दधानमम्भोरुहकेसरद्युतीर्जटाः शरच्चन्द्रमरीचिरोचिषम् ।
विपाकपिङ्गास्तुहिनस्थलीरुहो धराधरेन्द्रं व्रततीततीरिव ॥ १-५

अत्र पूर्वार्द्धे लुप्तोपमाद्वयम् परार्द्धे च श्रौती पूर्णोपमा ।

३–पिशङ्गमौञ्जीयुजमर्जुनच्छविं वसानमेणाजिनमञ्जनद्युति ।
सुवर्णसूत्राकलिताधराम्बरां विडम्बयन्तं शितिवाससस्तनुम् ॥ १-६

अत्र विडम्बयन्तं इति आर्थी उपमा ।

४–विहङ्गराजाङ्गरुहैरिवायतैर्हिरण्मयोर्वीरुहवल्लितन्तुभिः ।
कृतोपवीतं हिमशुभ्रमुच्चकैर्घनं घनान्ते तडिता गुणैरिव ॥ १-७

अत्र प्रथमे चतुर्थे च चरणयोः श्रौतोपमा समासगा च ।

५–निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा लसद्बिसच्छेदसिताङ्गसङ्गिना ।
चकासतं चारुचमूरुचर्मणा कुथेन नागेन्द्रमिवेन्द्रवाहनम् ॥ १-८

अत्र द्वितीयचरणे लुप्तोपमा चतुर्थचरणे च श्रौतोपमा पूर्णा च ।

६–पतत्पतङ्गप्रतिमस्तपोनिधिः पुरोऽस्य यावन्न भुवि व्यलीयत ।
गिरेस्तडित्वानिव तावदुच्चकैर्जवेन पीठादुदतिष्ठदच्युतः ॥ १-१२

पतङ्गप्रतिम इति समासगता, आर्थीयमुपमा । द्वितीयार्धे पूर्णोपमा ।

७–न यावदेतावुदपश्यदुत्थितौ जनस्तुषाराञ्जनपर्वताविव ।
स्वहस्तदत्ते मुनिमासने मुनिश्चिरन्तनस्तावदभिन्यवीविशत् ॥ १-१५

धर्म लुप्ता आर्थीसमासगोपमा ।

अत्र वाचकशब्दलुप्तोपमा सा च समासगा ।

६८–गोपानसीषु क्षणमास्थितानामालम्बिभिश्चन्द्रकिणां कलापैः ।
हरिन्मणिश्यामतृणाभिरामैर्गृहाणि नीध्रैरिव यत्र रेजुः ॥ ३-४६

अत्रापि वादिलुप्तोपमा वाक्यगा, च सा ।

६९–छन्नेष्वपि स्पष्टतरेषु यत्र स्वच्छानि नारीकुचमण्डलेषु ।
आकाशसाम्यं दधुरम्बराणि न नामतः केवलमर्थतोऽपि ॥ ३-५६

आर्थी समासगोपमा पूर्णा च ।

७०–निषेव्यमाणेन शिवैर्मरुद्भिरध्यास्यमाना हरिणा चिराय ।
उद्रश्मिरत्नाङ्कुरधाम्नि सिन्धोर्वाह्लास्ति मेराविव मरावती या ॥ ३ ६२

वादिलुप्तोपमा वाक्यगा च सा ।

७१–स्निग्धाञ्जनश्यामरुचिः सुवृत्तो वध्वा इवाध्वसितवर्णकान्ते ।
विशेषकों वा विशिशेष यस्याः श्रियं त्रिलोकीतिलकः स एव ॥ ३-६३

श्रौतोपमा श्लिष्टा पूर्णा च सा ।

७२–तामीक्षमाणः स पुरः पुरस्तात्प्रापत्प्रतोलीमतुलप्रतापः ।
वज्रप्रभोद्भासिसुरायुधश्रीर्या देवसेनेव परैरलङ्घ्या ॥ ३-६४

पूर्णोपमा श्रौती समासगा च सा ।

७३–गङ्गा इवाङ्कादरविन्दनाभेः शंभोर्जटाजूटतटादिवापः ।
मुखादिवाथ श्रुतयो विधातुः पुरान्निरीयुर्मुरजिद्ध्वजिन्यः ॥ ३ ६५

मालोपमेयं श्रौती समासगा च सा ।

७४–निरन्तरालेऽपि विमुच्यमाने दूरं पथि प्राणभृतां गणेन ।
तेजोमहद्भिस्तमसेव दीपैर्द्विपैरसंबाधमयाम्बभूवे ॥ ३-६७

श्रौतोपमा पूर्णा वाक्यगा चेयम् ।

७५–पारेजलं नीरनिधेरपश्यन्मुरारिरानीलपलाशराशी. ।
वनावलीरुत्कलिकासहस्रप्रतिक्षणोत्कूलित वलाभा' ॥ ३-७०

वाचकशब्दलुप्तोपमा सा च समासगा ।

७६–लक्ष्मीभृतोऽम्भोधितटाधिवासान् द्रुमानसौ नीरदनीलभास ।
लतावधूसम्प्रयुजोऽधिवेल बहूकृतान् स्वानिव पश्यति स्म ॥ ३-७१

समासगा लुप्तोपमा ।

७७–उद्धृत्य मेघैस्तत एव तोयमर्थं मुनीन्द्रैरिव सम्प्रणीता. ।
आलोकयामास हरि पतन्तीर्नदी' स्मृतीर्वेदमिवाम्बुराशिम् ॥ ३-७५

पूर्णोपमा श्रौती समासगा च ।

७८–क्वचिज्जलापायविपाण्डुराणि धौतोत्तरीयप्रतिमच्छवीनि ।
अभ्राणि बिभ्राणमुमाङ्गसङ्गविभक्तभस्मानमिव स्मरारिम् ॥ ४-५

श्रौती उपमा सा च पूर्णा समासगा ।

७९–विलम्बिनीलोत्पलकर्णपूरा कपोलभित्तीरिव लोध्रगौरी. ।
नवोलपालङ्कृतसैकताभा शुचीरप शैवलिनीर्दधानम् ॥ ४-८

श्रौतोपमार्थोपमयो समृष्टि ।

८०–यत्र परार्ध्यानि भृतान्यनूनं प्रस्थैर्मुहुर्भूरिभिरुच्छिखानि ।
आढ्यादिव प्रापणिकादजस्रं जग्राह रत्नान्यमितानि लोक' ॥ ४-११

श्रौती उपमा सा पूर्णा समासगा च ।

८१–यत्राधिरूढेन महीरुहोच्चैरुन्निद्रपुष्पाक्षिसहस्रभाजा ।
सुराधिपाधिष्ठितहस्तिमल्ललीला दधौ राजतगण्डशैल ॥ ४-१३

अत्र वाचकशब्दलुप्तोपमा सा च समासगा ।

८२–विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्या. परित स्फुरन्त्या ।
रत्नै पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः ॥ ४-१४

वादिलुप्तोपमा सा च समासगा ।

८३–वहति य परित. कनकस्थली सहरिता लसमाननवांशुका ।
अचल एष भवानिव राजते स हरितालसमाननवांशुकः ॥ ४-२१

श्रौतोपमार्थोपमयो ससृष्टि ।

८४–कृत्वा पुंवत्पातमुच्चैर्भृगुभ्यो मूर्ध्नि ग्राव्णा जर्जरा निर्झरौघाः ।
कुर्वन्ति द्यामुत्पतन्त स्मरार्तस्वर्लोकस्त्रीगात्रनिर्वाणमत्र ॥ ४-२३

आर्थी तद्धितगतोपमा पूर्णा च सा ।

८५–स्थगयन्त्यमू शमितचातकार्तस्वरा
जलदास्तडित्तुलितकान्तकार्तस्वरा ।
जगतीरिह स्फुरितचारुचामीकरा.
सवितुः क्वचित् कपिशयन्ति चामी करा ॥ ४-२४

समासगा आर्थ्युपमा ।

८६–उच्चैर्महारजतराजिविराजितासौ
दुर्वर्णभित्तिरिह सान्द्रसुधासवर्णा ।
अभ्येति भस्मपरिपाण्डुरितस्मरारे-
रुद्वह्निलोचनललामललाटलीलाम् ॥ ४-२८

वाचकशब्दलुप्तोपमा सा च समासगा ।

८७–धूमाकारं दधति पुर. सौवर्णे
वर्णेनाग्नेः सदृशि तटे पश्यामी ।
श्यामीभूताः कुसुमसमूहैरलीनां लीना
श्रेणीमिह तरवो बिभ्राणाः ॥ ४-३०

वादिलुप्तोपमा सा च वाक्यगा ।

८८–व्योमस्पृश. प्रथयता कलधौतभित्ती-
रुन्निद्रपुष्पचणचम्पकपिङ्गभासः ।

मौलेर्नवीमधिगतेन नितम्बशोभा-
मेनेन भाग्नमिलाकृतवद्विभाति ॥४-३१

आर्थी तद्धितगा पूर्णोपमा ।

८९–वनस्पतिस्कन्धनिषण्णबालप्रवालहस्ता प्रमदा इवात्र ।
पुष्पेक्षणैर्लम्भितलोचकैर्वा मधुव्रतव्रातवृतैर्व्रतत्यः ॥ ४-३५

पूर्णोपमा श्रौती समासगा च ।

९०–विद्वद्भिरागमपरैर्विवृतं कथंचि-
च्छ्रुत्वापि दुर्ग्रहमनिश्चितधीभिरन्यैः ।
श्रेयान् द्विजातिरिव हन्तुमघानि दक्षं
गूढार्थमेष निधिमन्त्रगणं बिभर्ति ॥ ४-३७

पूर्णोपमा श्रौती समासगा च सा ।

९१–सवधूकाः सुखिनोऽस्मिन्ननवरतममन्दरागतामरसदृशः ।
नासेवन्ते रसवन्न नवरतममन्दरागतामरसदृशः ॥ ४-५१

तद्धितगा आर्थी उपमा वाचकशब्दलुप्तोपमा ।

९२–एतस्मिन्नधिकपयःश्रियं वहन्त्यः
संक्षोभं पवनभुवा जवेन नीताः ।
वाल्मीकेररहितरामलक्ष्मणानां
साधर्म्यं दधति गिरां महासरस्यः ॥ ४-५६

वाक्यगा आर्थी उपमा ।

९३–नवनगवनलेखाश्याममध्याभिराभिः
स्फटिककटकभूमिर्नाटयत्येष शैलः ।
अहिपरिकरभाजो भास्मनैरङ्गरागै-
रधिगतधवलिम्नः शूलपाणेरभिख्याम् ॥ ४-६५

वाक्यगा वाचकशब्दलुप्तोपमा ।

९४–दर्पणनिर्मलासु पतिते घनतिमिरमुषि
ज्योतिषि रौप्यभित्तिषु पुरः प्रतिफलति मुहुः ।
व्रीडमभगवोऽपि रमणैरपहृतवसनाः
काञ्चनकन्दरासु तरुणीरिह नयति रविः ॥ ४-६७

वाचकशब्दलुप्तोपमा आर्थी वाक्यगा च ।

९५–अनुकृतशिखरौघश्रीभिरभ्यागतेऽसौ
त्वयि सरभसमभ्युत्तिष्ठतीवाद्रिरुच्चैः ।
द्रुतमरुदुपनुन्नैरुन्नमद्भिः सहेल
हलधरपरिधानश्यामलैरम्बुवाहैः ॥ ४-६८

आर्थोपमा वाचकशब्दलुप्ता समासगा च ।

९६–इत्थ गिरः प्रियतमा इव सोऽव्यलीकाः
शुश्राव सूततनयस्य तदा व्यलीकाः ।
रन्तु निरन्तरमियेष ततोऽवमाने
तासा गिरौ च वनराजिपट वसाने ॥ ५-१

पूर्णा श्रौती उपमा समासगा च ।

९७–भास्वत्करव्यतिकरोल्लसिताम्बरान्ताः
सापत्रपा इव महाजनदर्शनेन ।
सविद्युरम्बरविकासि चमूसमुत्थं
पृथ्वीरजः करभकण्ठकडारमाशाः ॥ ५-३

लुप्तोपमा समासगा च ।

९८–आवर्तिनः शुभफलप्रदशुक्तियुक्ताः
सपन्नदेवमणयो भृतरन्ध्रभागाः ।
अश्वाः प्यधुर्वसुमतीमतिरोचमाना-
स्तूर्णं पयोधय इवोर्मिभिरापतन्तः ॥ ५-४

साहित्यदर्पणमते पूर्णोपमा समासगा श्रौती च।

९९–शैलोपशल्यनिपतद्रथनेमिधारा-
निष्पिष्टनिष्ठुरशिलातलचूर्णगर्भाः।
भूरेणवो नभसि नद्धपयोदचक्रा-
श्चक्रीवदङ्गरुहधूम्ररुचो विसस्रुः॥ ५-८

आर्थी पूर्णा तद्धितगा।

१००–नीहारजालमलिनः पुनरुक्तसान्द्राः
कुर्वन्वधूजनविलोचनपक्ष्ममालाः।
क्षुण्णः क्षणं यदुबलैर्दिवमाततान
पांशुर्दिशां मुखमतुत्थयदुत्थितोऽद्रेः॥५-११

आदिलुप्तोपमा वाक्यगा च।

१०१–उच्छिद्य विद्विष इव प्रसभं मृगेन्द्रा-
निन्द्रानुजानुचरभूपतयोऽध्यवात्सुः।
वन्येभमस्तकनिखातनखाग्रमुक्त-
मुक्ताफलप्रकरभाञ्जि गुहागृहाणि॥५-१२

समासगा श्रौती धर्मलुप्तोपमा।

१०२–बिभ्राणया बहलयावकपङ्कपिङ्ग-
पिञ्छावचूडमनुमाधववाम जग्मुः।
चञ्च्वग्रदष्टचटुलाहिपताकयान्ये
स्वावामभागमुरगाशनकेतुयष्ट्या॥ ५-१३

समासगा वाचकलुप्तोपमा।

१०३–सिक्ता इवामृतजलेन मुहुर्जनाना
क्लान्निच्छिदो वनवनस्पतयस्तदानीम्।

रागादसक्तवसनाभरणैर्निरामाः
कल्पद्रुमैः सह विचित्रफलैर्विरेजुः ॥ ५-१९

समासगा वादिलुप्तोपमा ।

१०४—नाभिह्रदैः परिगृहीतरयाणि निम्नैः
स्त्रीणां बृहज्जघनसेतुनिवारितानि ।
जग्मुर्जलानि जलमड्डुकवाद्यवल्गु-
वल्गद्घनस्तनतटस्खलितानि मन्दम् ॥ ५-२१

वादिलुप्तोपमा सा च समासगा ।

१०५—कीर्णं शनैरनुकपोलमनेकपानां
हस्तैर्विगाढमदनापरुजः शमाय ।
आवर्णमुल्लसितमम्बु विकासिकाश-
नीकाशमाप समतां सितचामरस्य ॥ ५-३५

आर्थी वाक्यगा पूर्णोपमा ।

१०६—गण्डूषमुज्झितवता पयसः सरोषं नागेन लब्धपरवारणमारुतेन
अम्भोधिरोधसि पृथुप्रतिमानभागरुद्धोरुदन्तमुसलप्रसरं निपेते ॥ ५-३६

वादिलुप्तोपमा समासगा ।

१०७—उष्णोष्णशीकरसृजः प्रवलोष्मणोऽन्त-
रस्फूर्जन्नीलनलिनोदरतुल्यभासः ।
एकान् वितानशिरसो हरिचन्दनेषु
नागान् बबन्धुरपरान्मनुजा निरासुः ॥ ५-४५

समासगा पूर्णोपमा आर्थीयम् ।

१०८—हेम्नः स्थलीषु परितः परिवृत्य वाजी
धुन्वन् वपुः प्रविततायतकेसरपंक्ति ।

ज्वालाकणारुणरुचा निकरेण रेणो
र्दीपेण तेजस इवोल्लसता रराज ॥ ५-५५

वादिलुप्तोपमा समासगा च ।

१०९–दन्तालिकाधरणनिश्चलपाणियुग्म-
मर्धोदितो हरिरिवोदयशैलमूर्ध्नः ।
स्तोकेन नाक्रमत वल्लभपालमुच्चैः
श्रीवृक्षकी पुरुषकोन्नमिताग्रकाय ॥ ५-५६

पूर्णा श्रौतोपमा समासगा च ।

११०–रेजे जनं स्नपनसान्द्रतरार्द्रमूर्ति-
र्देवैरिवानिमिषदृष्टिभिरीक्ष्यमाणः ।
श्रीसन्निधानरमणीयतरोऽश्व उच्चै-
रुच्चैःश्रवा जलनिधेरिव जातमात्रः ॥ ५-५७

श्रौती पूर्णोपमा समासगा च ।

१११–सार्धं कथञ्चिदुचितैः पिचुमर्दपत्रै-
रास्यान्तरालगतमाम्रदलं म्रदीयः ।
दासेरकः सपदि संवलितं निषादै-
र्विप्रं पुरा पतगराडिव निर्जगार ॥ ५-६६

पूर्णा श्रौतोपमा समासगा च ।

११२–उभ्रप्रताम्रपटमण्डपमण्डितं त-
दानीलनागकुलसङ्कुलमाबभासे ।
मन्ध्यागुभिन्नघनकर्बुरितान्तरिक्ष-
लक्ष्मीविडम्बि शिबिरं शिवकीर्तनस्य ॥ ५-६८

आर्थी पूर्णोपमा समासगा च ।

११३–तुलयति स्म विलोचनतारकाः कुरवकस्तवकव्यतिषङ्गिणि ।
गुणवदाश्रयलब्धगुणोदये मलिनिमालिनि माधवयोषिताम् ॥ ६-४

पूर्णा आर्थी तद्धितगा च ।

११४–प्रियसखीसदृशं प्रतिबोधिता किमपि काम्यगिरा परपुष्टया ।
प्रियतमाय वपुर्गुरुमत्सरच्छिदुरयाऽऽतुरयाचितमङ्गना ॥ ६-८

आर्थोपमा सा च समासगा ।

११५–मधुकरैरपवादकरैरिव स्मृतिभुवः पथिका हरिणा इव ।
कलतया वचसः परिवादिनीस्वरजिता रुजिता वशमाययुः ॥ ६-६

उपमाद्वयं श्रौती पूर्णा समासगा च ।

११६–सुरभिणि श्वसिते दधतस्तृषं नवसुधामधुरे च तवाधरे ।
अलमलेरिव गन्धरसावमू मम न सौमनसौ मनसो मुदे ॥ ६-१२

श्रौती पूर्णोपमा समासगा च ।

११७–दलितकोमलपाटलकुड्मले निजवधूश्वसितानुविधायिनि ।
मरुति वाति विलासिभिरुन्मदभ्रमदलौ मदलौल्यमुपाददे ॥ ६-२३

आर्थी धर्मोपमानलुप्तोपमा वाक्यगा च ।

११८–अनुययौ विविधोपलकुण्डलद्युतिवितानकसंवलितांशुकम् ।
धृतधनुर्वलयस्य पयोमुचः शबलिमा बलिमानमुषो वपुः ॥ ६-२७

वाचकशब्दलुप्तोपमा समासगा च ।

११९–द्रुतसमीरचलैः क्षणलक्षितव्यवहिता विटपैरिव मञ्जरी ।
नवतमालनिभस्य नभस्तरोरचिररोचिररोचत वारिदे ॥ ६-२८

श्रौती पूर्णोपमा सा च समासगा ।

१२०–द्विरददन्तवलक्षमलक्ष्यत स्फुरितभृङ्गमृगच्छवि केतकम् ।
घनघनोर्घविघट्टनया दिवः कृशशिखं शशिखण्डमिवच्युतम् ॥ ६-३४

अत्र प्रथमे पादे वादिधर्मलुप्तोपमा ।

१२१–दलितमौक्तिकचूर्णविपाण्डवः स्फुरितनिर्झरशीकरचारवः ।
कुटजपुष्पपरागकणाः स्फुटं विदधिरे दधिरेणुविडम्बनाम् ॥ ६-३५

पूर्वोपमानद्वयानुप्राणितेयमुपमा सा आर्थी वाक्यगा च ।

१२२–नवपयःकणकोमलमालतीकुसुमसन्ततिसन्ततसङ्गिभिः ।
प्रचलितोडुनिभैः परिपाण्डिमा शुभरजोभरजोऽलिभिरादधे ॥ ६-३६

वादिलुप्तोपमा सा च समासगा ।

१२३–निजरजः पटवासमिवाकिरद्धृतपटापमवारिमुचां दिशाम् ।
प्रियवियुक्तवधूजनचेतसामनवनी नवनीपवनावलिः ॥ ६-३७

श्रौती सर्वोपमान सा च समासगा ।

१२४–अनुवनं वनराजिवधूमुखे बहलरागजपाधरचारुणि ।
विकचबाणदलावलयोऽधिकं रुरुचिरे रुचिरेक्षणविभ्रमाः ॥ ६-४६

समासगा वाचकशब्दलुप्तोपमा ।

१२५–मुखसरोजरुचं मदपाटलामनुचकार चकोरदृशां यतः ।
धृतनवातपमुत्सुकतामतो न कमलं कमलं कददन्नलिः ॥ ६-४८

वादिलुप्तोपमा सा च वाक्यगा ।

–विगतवारिधरावरणाः क्वचिद्ददृशुरुल्लसितासितासिताः ।
क्वचिदिवेन्द्रगजाजिनकञ्चुकाः शरदि नीरदिनीर्यदवो दिशः ॥ ६-५१

श्रौती पूर्णोपमा सा च समासगा ।

१२७–धनिपिदेणमिषु भुवनानि यः स्मरमिवास्यत लोध्ररजश्चयः ।
स्मितसैन्यपरागविपाण्डुरत्वविरचयन्नुदगूढदिशः ॥ ६-६४

अत्र तृतीयपादे वादिलुप्तोपमा समासगा च ।

१२८–वपुरम्बुविहारहिम शुचिना रुचिरं कमनीयतरा गमिता ।
रमणेन रमण्यचिरांशुलताचिरवच्छमनीयत रागमिना ॥ ६-७१

वाचकशब्दलुप्तोपमा समासगा च ।

१२९–मुदमब्दमुवामपा मयूरा सहसायन्त नदी पपाट लाभे ।
अनिनारमतालिनो शिलीन्ध्रे मह सायन्तनदीपपाटलाभे ॥ ६-७२

वाचकशब्दलुप्तोपमा समासगा च सा ।

१३०–कुटजानि वीक्ष्य शिखिभि शिखरीन्द्र समयावनौ घनमदभ्रमराणि ।
गगन च गोननिनदस्य गिरोच्चैं समया वनौघनमदभ्रमराणि ॥ ६-७३

वादिलुप्तोपमा समासगा च ।

१३१–स्तनयो: समयेन याङ्गनानामभिनद्धारसमा न सा रसेन ।
परिरम्भरुचि ततिर्जलानामभिनद्धा रसमानसारसेन ॥ ६ ७५

समासगा आर्थोपमा ।

१३२–मदनरसमहौघपूर्णनाभीह्रदपरिवाहितरोमराजयस्ता: ।
सरित इव सविभ्रमप्रयातप्रणदितहंसकभूषणा विरेजु: ॥ ७-२३

श्लिष्टविशेषणेयमुपमा सा पूर्णा समासगा च ।

१३३–विलसितमनुकुर्वती पुरस्ताद्धरणिरुहाधिरुहो वधूर्लतया: ।
रमणमृजुतया पुर सखीनामकलितचापलदोरमालिलिङ्ग ॥ ७-४६

आर्थी वादिलुप्तोपमा समासगा च ।

१३४–सललितमवलम्ब्य पाणिनांसे सहचरमुच्छ्रितगुच्छवाञ्छयान्या ।
सकलकलभकुम्भविभ्रमाभ्यामुरसि रसादवतस्तरे स्तनाभ्याम् ॥ ७-४७

तृतीयचरणे वाचकलुप्तोपमा समासगा च ।

१३५–अतनुकुचभरानतेन भूय क्लमजनितानतिना शरीरकेण ।
अनुचितगतिसादनि:सहत्व कलभकरोरुभिरुरुभिर्दधाने ॥ ७-६६

अत्र प्रथमपादे आर्थी समासगा चतुर्थपादे च श्रौती समासगा पूर्णोपमा ।

१५२—अगमन्नु भूधरगुहान्तरतः पटलं बहिर्बहुलपङ्करुचि ।
दिवसावसानपटुनस्तमसो बहिरेत्य चाधिकमभक्त गुहा ॥ ९-१९

द्वितीयपादे वादिलुप्तोपमा समासगा च ।

१५३—नवचन्द्रिकाकुसुमकीर्णतमः कबरीभृतो मलयजार्द्रमिव ।
ददृशे ललाटतटहारि हरेर्हरितो मुखे तुहिनरश्मिदलम् ॥ ९-२८

श्रौती पूर्णोपमा समासगा ।

१५४—उदमज्जि कैटभजितः शयनादपनिद्रपाण्डुरसरोजरुचा ।
प्रथमप्रबुद्धनदराजसुतावदनेन्दुनेव तुहिनद्युतिना ॥ ९-३०

द्वितीयपादे वादिलुप्तोपमा समासगा ।

१५५—उपजीवति स्म सततं दधतः परिमुग्धतां वणिगिवोडुपतेः ।
सतवीयिवीयमवतीर्णवतो निधिरम्भसामुपचयाय कलाः ॥ ९-३२

श्रौती पूर्णा समासगोपमा ।

१५६—अमृतद्रवैर्विदधदब्जदृशामपमार्गमोषधिपतिः स्म करैः ।
परितो विसर्पि परितापि भृशं वपुषोऽवतारयति मानविषम् ॥ ९-३६

वादिधर्मलुप्तोपमा समासगेयम् ।

१५७—मदनोदरेषु परिमन्दतया करिणोऽलसः स्फटिकयष्टिरिव ।
अवलम्ब्य जालकमुखोपगतानुदतिष्ठदिन्दुकिरणान्मदनः ॥ ९-३९

समासगा वादिलुप्तोपमा ।

१५८—निजपाणिपल्लवतलस्खलनादभिनासिकाविवरमुत्पतितैः ।
अपरा परीक्ष्य शनकैर्मुमुदे मुखवाससमास्यकमलश्वसनैः ॥ ९-५७

पाणिपल्लव इति वादिलुप्तोपमा सा च समासगा ।

१४९–प्रणयप्रकाशनविदो मधुराः सुतरामभीष्टजनचित्तहृतः ।
प्रजिघाय कान्तमनु मुग्धतरास्तरुणीजनो दृश इवाथ सखी. ९-

अत्र साहित्यदर्पणमते पूर्णोपमा श्रौती समासगा च ।

१५०–सज्जितानि सुरभीण्यथ यूनामुल्लसन्नयनवारिरुहाणि ।
आययुः सुघटितानि सुरायाः पात्रतां प्रियतमावदनानि ॥ १०-

समासगा वादिलुप्तोपमा ।

१५१–हावहारि हसितं वचनानां कौशलं दृशि विकारविशेषाः ।
चक्रिरे भृशमृजोरपि वध्वा कामिनेव तरुणेन मदेन ॥ १०-१

श्रौती पूर्णोपमा समासगा च ।

१५२–सन्तमेव चिरमप्रकृतत्वादप्रकाशितमदिद्युतदङ्गे ।
विभ्रमं मधुमदः प्रमदानां धातुलीनमुपसर्ग इवार्थम् ॥ १०-१५

श्रौती पूर्णोपमा समासगा च ।

१५३–मानभङ्गपटुना सुरतेच्छां तन्वता प्रथयता दृशि रागम् ।
लेभिरे सपदि भावयतान्तर्योषितः प्रणयिनेव मदेन ॥ १० ३

श्रौती पूर्णोपमा समासगा च ।

१५४–आननं लघितवत्यभिकण्ठे नीविमर्धमुकुलीकृतदृष्ट्या ।
रक्तवैणिकहताधरतन्त्रीमण्डलक्वणितचारु चुकूजे ॥ १० ६४

उपमेयवादिलुप्तोपमा समासगा च ।

१५५–संगताभिरुचितैश्चलितापि प्रागमुच्यत चिरेण सखीव ।
भूय एव समगंस्त रतान्ते ह्रीर्वधूभिरसहा विरहस्य ॥ १०-८१

श्रौती पूर्णोपमा समासगा च ।

१५६–प्रेक्षणीयकमिव क्षणमासन् ह्रीविभङ्गुरविलोचनपाताः ।
संभ्रमद्रुतगृहीतदुकूलच्छाद्यमानवपुषः सुरतान्ताः ॥ १० ८२

श्रौती पूर्णा समासगोपमा ।

१५७—स्फुटतरमुपरिष्टादल्पमूर्तेर्ध्रुवस्य
स्फुरति सुरमुनीनां मण्डलं व्यस्तमेतत् ।
शकटमिव महीयः शैशवे शार्ङ्गपाणे-
श्चपलचरणकाब्जप्रेरणोत्तुङ्गिताग्रम् ॥ ११-३

पूर्णोपमा सा च श्रौती समासगा ।

१५८—क्षणशयितविबुद्धाः कल्पयन्तः प्रयोगा-
नुदधिमहति राज्ये काव्यवद् विगाहे ।
गहनमपररात्रप्राप्तबुद्धिप्रसादाः
कवय इव महीपाश्चिन्तयन्त्यर्थजातम् ॥ ११-६

शब्दार्थगता श्रौती पूर्णोपमा समासगा च ।

१५९—द्रुतनरकरदक्षाः क्षिप्तवैशाखशैले
दधति दधनि धीरानारवान्वारिणीव ।
शशिनमिव सुरौघाः सारमुद्धर्तुमेते
कलशिमुदधिगुर्वीं वल्लवा लोडयन्ति ॥ ११-८

वाक्यगतानन्तर्गता पूर्णा श्रौती समासगोपमा

१६०—कृतधवलिमभेदैः कुङ्कुमेनेव किंचि-
न्मलयरुहरजोभिर्भूषयन्पश्चिमाशाम् ।
हिमरुचिररुणिम्ना राजते रज्यमानै-
र्जरठकमलकन्दच्छेदगौरैर्मयूखैः ॥ ११-१४

श्रौती पूर्णोपमा समासगा च ।

१६१—वद जगद पुरस्तात्तस्य मत्ता किलाहं
चकर च किल चाटु प्रौढयोषिद्वदस्य ।
विदितमिति सखीभ्यो रात्रिवृत्तं विचिन्त्य
व्यपगतमदयाह्नि व्रीडितं मुग्धवध्वा ॥ ११-३६

तद्धितगा श्रौती पूर्णोपमा ।

१६२–अरुणजलजराजीमुग्धहस्ताग्रपादा
बहुलमधुपमालाकज्जलेन्दीवराक्षी ।
अनुपतति विरावैः पत्रिणां व्याहरन्ती
रजनिमचिरजाता पूर्वसन्ध्या सुतेव ॥ ११-४०

द्वितीयपादे वादिधर्मलुप्तोपमा समासगा चतुर्थचरणे तु श्रौती पूर्णोपमा समासगा च ।

१६३–अक्षीतजपविधिनामास्यमुद्रश्मिदन्त
मुहुरपिहितमोष्ठ्यं रक्षरैर्लक्ष्यमन्यैः ।
प्रशुक्तिमनुवेल घट्टितोद्घट्टितस्य
व्रजति नियमभाजा मुग्धमुक्तापुटस्य ॥ ११-४२

वादिलुप्तोपमा समासगा च ।

१६४–पयसि सलिलराशेर्नक्तमन्तर्निमग्न।
स्फुटमनिशमतापि ज्वालया वाडवाग्ने ।
यदयमिदमिदानीमङ्गमुद्यन्दधाति
ज्वलितखदिरकाष्ठाङ्गारगौरं विवस्वान् ॥ ११-४५

चतुर्थपादे वादिलुप्तोपमा समासगा च ।

१६५–परिणतमदिराभ भास्करेणांशुबाणै-
स्तिमिरकरिघटाया सर्वदिक्षु क्षताया ।
रुधिरमिव वहन्त्यो भान्ति बालातपेन
च्छुरितमुभयरोधोवारित वारि नद्य ॥ ११-४६

अत्र परिणतमदिराभमिति वादिलुप्तोपमा समासगा च ।
रुधिरमिव वारि इति पूर्णा समासगा ।

१६६–सरभसनखपदान्तर्दष्टदशग्रमोक
प्रणयिनि विदधाने योषितामुल्लसन्त्यः ।

विदधति दशनानां मौक्तिकाविष्कृतानां-
मभिनवरविभासः पद्मरागानुकारम् ॥ ११-५४

समासगा वादिलुप्तोपमा ।

१६७–अविरतदयिताङ्गासङ्गसंचारितेन
छुरितमभिनवासृक्कान्तिना कुङ्कुमेन ।
कनकनिकषरेखाकोमलं कामिनीनां
१८ भवति वपुरवाप्तच्छायमेवातपेऽपि ॥ ११-५५

वादिलुप्तोपमा समासगा च ।

१६८–सरसिजवनकान्तं बिभ्रदभ्रान्तवृत्ति
करनयनसहस्रं हेतुमालोकशक्तेः ।
अखिलमतिमहिम्ना लोकमाक्रान्तवन्तं
हरिरिव हरिदश्वः साधु वृत्रं हिनस्ति ॥ ११-५६

श्रौती श्लिष्टसमासगा पूर्णोपमा ।

१६९–प्रतिफलति करौघे सम्मुखावस्थितायां
रजतकटकभित्तौ सान्द्रचन्द्रांशुगौर्याम् ।
वहिरभिहतमद्रेः संहतं कन्दरान्त-
र्गतमपि तिमिरौघं घर्मभानुर्भिनत्ति ॥ ११-५८

समासगा वादिलुप्तोपमा ।

१७०–मदयमिव कराग्रैरेष निष्पीड्य सद्यः
शशधरमहरादौ रागवानुष्णरश्मिः ।
अवकिरति नितान्तं कान्तिनिर्यासमच्छ-
स्नुतनवजलपाण्डु पुण्डरीकोदरेषु ॥ ११-६२

अच्छेत्यादौ वादिलुप्तोपमा सा च समासगा ।

१७१–क्षणमतुहिनधाम्नि प्रोष्य भूयः पुरस्ता-
दुपगतवति पाणिग्राहवद्दिग्वधूनाम् ।

द्रुततरमुपयाति स्म समानाङ्गकोऽस्मा-
वुपपतिरिव नीचैः पश्चिमान्तेन चन्द्रः ॥ ११-६५

श्रौती पूर्णोपमा समासगा च ।

१७२–प्रलयमखिलतारालोकमह्नाय नीत्वा
श्रियमनतिशयश्री सानुरागां दधानः ।
गगनसलिलराशिं रात्रिकल्पावसाने
मधुरिपुरिव भास्वानेष एकोऽधिशेते ॥११-६६

मधुरिपुरिवेति समासगा पूर्णोपमा ।

१७३–स्वक्ष सुपत्रं कनकोज्ज्वलद्युति जवेन नागाञ्जितमुच्चकैः ।
मारुह्य तार्क्ष्यं नभसीव भूतले ययावनुद्रुतमुखेन सोऽध्वना ॥ १२-२

श्रौती पूर्णोपमा समासगा च ।

१७४–शुक्लैः सतारैर्मुकुलीकृतैः स्थुलैः कुमुद्वतीनां कुमुदाकरैरिव ।
व्युष्टं प्रयाणं च वियोगवेदनाविदूननारीकमभूत्तम तदा ॥ १२-४

अत्र साहित्यदर्पणमते श्रौती पूर्णोपमा समासगा च ।

१७५–नानाविधाविष्कृतसामजस्वरः सहस्रवर्त्मा चपलैर्दुरध्ययः ।
गान्धर्वभूयिष्ठतया समानतां स सामवेदस्य दधौ बलोदधिः ॥ १२-११

आर्थी पूर्णोपमा वाक्यगा च ।

१७६–कालीयकक्षोदविलेपनश्रियं दिशद्दिशामुल्लसदंशुमद्द्युति ।
व्यात खुरैर्मुद्गभुजा विपश्यये गिरेरधः काञ्चनभूमिजं रजः ॥ १२-१४

वादि लुप्तोपमा समासगा च ।

१७७–सन्ताङ्गसंधौ विगताक्षपाटवे रुजा निकाम विकलीकृते रथे ।
आप्तेन तक्ष्णा भिषजेव तत्क्षणं प्रचक्रमे लङ्घनपूर्वकः क्रमः ॥ १२-२५

साहित्यदर्पणमते पूर्णोपमा ।

१७८–कोशातकीपुष्पगुलुच्छकान्तिभिर्मुखैर्विनिद्रोल्बणबाणचक्षुष ।
ग्रामीणवध्वस्तमलक्षिता जनैश्चिरं वृतीनामुपरि व्यलोकयन् ॥१२-३७

समासगा वादिलुप्तोपमा ।

१७९–श्च्योतन्मदाम्भःकणकेन केनचिज्जनस्य जीमूतकदम्बद्युता ।
नागेन नागेन गरीयसोच्चकैरसोधि पन्थाः पृथुदन्तशालिना ॥ १२-४८

द्वितीयपादे वादिलुप्तोपमा समासगा च ।

१८०–स्मश्रूयमाणे मधुजालकेन तरोगंजेन गण्ड कषता विधूनिते ।
क्षुद्राभिरक्षुद्रतराभिराकुलं विदश्यमानेन जनेन दुद्रुवे ॥ १२-५४

वर्णाडिवादकलुप्तोपमा ।

१८१–नीते पलाशिन्युचिते शरीरवद्गजान्तकेनान्तमदान्तकर्मणा ।
सचेरुरात्मान इवापरं क्षणात्क्षमारुहं देहमिव प्लवंगमाः ॥१२-५५

पर्णेकेवशब्दवाच्यार्थोपमा ।

१८२–यस्या महानीलतटीरिव द्रुताः
प्रयान्ति पीत्वा हिमपिण्डपाण्डुराः ।
कालीरपस्ताभिरिवानुरञ्जिता
क्षणेन भिन्नाञ्जनवर्णतां घनाः ॥ १२-६८

समासगा पूर्णा श्रौती उपमा ।

१८३–व्यक्तं बलीयान्यदि हेतुरागमादपूरयत्सा जलधिं न जाह्नवी
गाङ्गौघनिर्भर्त्सितशंभुकंधरासवर्णमर्णः कथमन्यथास्य तत् ॥ १२-६९

तृतीयपादे वादिलुप्तोपमा समासगा च ।

१८४–अभ्युद्यतस्य क्रमितुं जवेन गां तमालनीला नितरां धृतायतिः ।
सीमेव सा तस्य पुरः क्षणं बभौ बलाम्बुराशेर्महती महापगा ॥ १२-७०

विदधति दशनानां सीत्कृताविष्कृतानाम्-
मभिनवरविभासं पद्मरागानुकारम् ॥ ११-५४

समासगा वादिलुप्तोपमा ।

१६७-अविरतदयिताङ्गासङ्गसंचारितेन
छुरितमभिनवासृक्कान्तिना कुङ्कुमेन ।
कनकनिकषरेखाकोमलं कामिनीनां
भवति वपुरवाप्तच्छायमेवातपेऽपि ॥ ११-५५

वादिलुप्तोपमा समासगा च ।

१६८-सरसिजवनकान्तं बिभ्रदभ्रान्तवृत्तिः
करनयनसहस्रं हेतुमालोकशक्तेः ।
अखिलमतिमहिम्ना लोकमाक्रान्तवन्तं
हरिरिव हरिदश्वः साधु वृत्रं हिनस्ति ॥ ११-५६

श्रौती श्लिष्टसमासगा पूर्णोपमा ।

१६९-प्रतिफलति करौघे सम्मुखावस्थितायां
रजतकटकभित्तौ सान्द्रचन्द्रांशुगौर्याम् ।
बहिरभिहतभद्रैः मंडतं कंदरान्त-
र्गतमपि तिमिरौघं घर्मभानुर्भिनत्ति ॥ ११-५८

समासगा वादिलुप्तोपमा ।

१७०-पदमिव करमङ्गेरं निगीर्य सद्यः
शशधरमहरादौ रागवानुष्णरश्मिः ।
अवकिरति नितान्तं कान्तिनिर्यासमब्द-
स्रुतनवजलपाण्डु पुण्डरीकोदरेषु ॥ ११-६२

अब्देत्यादौ वादिलुप्तोपमा सा च समासगा ।

१७१-अरुणमतुहिनधाम्नि प्रोष्य भूयः पुरस्ता-
दुपगतवति पाणिग्राहवद्दिग्वधूनाम् ।

पुरम. पुर प्रविशति स्म पञ्चभिः
सममिन्द्रियैरिव नरेन्द्रसूनुभिः ॥ १३-२८

समासगा श्रौतोपमा ।

१९९—तनुभिस्त्रिनेत्रनयनानवेक्षितस्मरविग्रहद्युतिभिरच्युतन्नराः ।
प्रमदाश्च यत्र खलु राजयक्ष्मणः परतो निशाकरमनोरमैर्मुखैः॥१३-२

वादिलुप्तोपमा समासगा च ।

२००—व्यतनादपास्य चरणं प्रमाधिकाकरपल्लवाद्रसवशेन काचन ।
द्रुतयावकैकपदचित्रितावनिं पदवीगतेव गिरिजा हरार्धताम् ॥१३-३३

श्रौती पूर्णोपमा समासगा च ।

२०१—करयुग्मपद्ममुकुलापवर्जितैः प्रतिवेश्म लाजकुसुमैरवाकिरन् ।
अवदीर्णशुक्तिपुटमुक्तमौक्तिकप्रकरैरिव प्रियरथाङ्गमङ्गनाः ॥१३-३३

प्रथमपादे वादिलुप्तोपमा । तृतीयपादे च पूर्णा श्रौती समासगा ।

२०२—हिममुक्तचन्द्ररुचिरः सपद्मको मदयन्द्विजाञ्जनितमीनकेतनः ।
अभवत्प्रमादितसुरो महोत्सवः प्रमदाजनस्य स चिराय माधवः ।१३-३८

हिमेत्यादिविशेषणे लुप्तोपमा ।

२०३—अधिकोन्नमद्घनपयोधरं मुहुः प्रचलत्कलापिकलगद्गदस्वना ।
अभिकृष्णमङ्गुलिमुखेन काचनद्रुतमेककर्णविवरं व्यघट्टयत्॥१३-४१

कलापिकलेत्युपमा समासगा च ।

२०४—परिपाटलाब्जदलचारुणामकृत्स्खलितांगुलीत्रिमलमेन पाणिना ।
सशिरःप्रकम्पमपरा रिपुं मधोरनुदीर्णतर्गनिभृतार्थमाह्वयत्॥१३-४२
वादिलुप्तोपमा समासगा च ।

२०५—निलयेषु लोहितकनिर्मिता भुवः सितिरत्नरश्मिहरितीकृतान्तराः ।
दमदग्निसूनुपितृतर्पणीरपो वहति स्म या विरलशैवला इव ॥१३-५२
श्रौती पूर्णोपमा समासगा ।

२०६–अभितः सदोऽथ हरिपाण्डवौ रथादमलाशुमण्डलसमुल्लसनन्।
अवतेरतुर्नयननन्दनौ नभः शशिभास्करावुदयशैलादिव ॥१३-६१

समासगा श्रौती पूर्णोपमा।

२०७–सुतरां सुखेन सकलक्लमच्छिदा सनिदाघमङ्गमिव मातरिश्वना।
यदुनन्दनेन तदुदन्वता पयः शशिनेव राजकुलमाप नन्दथुम् ॥१३-६४

श्रौती समासगा मालोपमा।

२०८–संभृतोपकरणेन निर्मलां कर्तुमिष्टिमभिवाञ्छता मया।
त्वं समीरण इव प्रतीक्षितः कर्षकेण वलजान् पुपूषता ॥ १४-५

समासगा श्रौती पूर्णोपमा।

२०९–तस्य सांख्यपुरुषेण तुल्यतां बिभ्रतः स्वयमकुर्वतः क्रियाः।
कर्तृता तदुपलम्भतोऽभवद् वृत्तिभाजि करणे यथर्त्विजि ॥ १४-१९

आर्थी वाक्यगा पूर्णोपमा।

२१०–वारिपूर्वमखिलासु सत्क्रियालब्धशुद्धिषु धनानि वीभवत्।
भावि बिभ्रति फलं महद्द्विजक्षेत्रभूमिषु नराधिपोऽवपत् ॥ १४-३

तद्धितगा आर्थी पूर्णोपमा।

२११–आगताद् व्यवसितेन चेतसा सत्वसम्पदविकारिमानसः।
तत्र नाभवदसौ महाहवे शात्रवादिव पराङ्मुखोऽर्थिनः ॥ १४-४४

समासगा श्रौती पूर्णोपमा।

२१२–स्वादयन्रसमनेकसंस्कृतप्राकृतैरकृतपात्रसंकरैः।
भावशुद्धिसहितैर्मुदं जनो नाटकैरिव बभार भोजनैः ॥१४-५०

श्रौती श्लिष्टा पूर्णोपमा।

२१३–एक एव सुसमेव सुन्वतां शौरिरित्यभिनयं वितन्वतो।
यूपमंगुलिमिवोदनीनमद् भूरचषालतुलिताङ्गुलीयकम् ॥ १४-४२

आर्थी धर्मलुप्तोपमा समासगा च।

२१४–गच्छतापि गगनाग्रमुच्चकैर्यस्य भूधरगरीयसाङ्घ्रिणा ।
क्रान्तकंधर इवाबलो बलिः स्वर्गभर्तुरगमत्सुबन्धुताम् ॥ १४·७३

भूधरगरीयसेति वादिलुप्तोपमा समासगा च ।

२१५–क्रामतोऽस्य ददृशुर्दिवौकसो दूरमूरुनलिनीलमायतम् ।
व्योम्नि दिव्यसरिदम्बुपद्धतिस्पर्धयेव यमुनौघमुत्थितम् ॥ १४·७३

समासगा श्रौती पूर्णोपमा ।

२१६–नात्तगन्धमवधूय शत्रुभिश्छायया च शमितामरश्रमम् ।
योऽभिमानमिव वृत्रविद्विषः पारिजातमुदमूलयद्दिवः ॥ १४·८४

साहित्यदर्पणमते पूर्णोपमा सा च श्रौती समासगा ।

२१७–स समेत्य च ललाटलेखया बिभ्रतः सपदि शम्भुविभ्रमम् ।
चण्डमारुतमिव प्रदीपवच्चेदिपस्य निरवाद्विलोचनम् ॥ १४·८५

श्रौती मालोपमा तद्धितगा समासगा च ।

२१८–पुर एव शार्ङ्गिणि सवैरमथ पुनरमुं तदर्चया ।
मन्युरभजदवगाढतरः समदोषकाल इव देहिनं ज्वरः ॥१५·२

श्रौती पूर्णोपमा समासगा च ।

२१९–स वमन्रुषा घनघर्मविगलदुरुगण्डमण्डलः ।
स्वेदजलकणकरालकरो व्यरुचत्प्रभिन्न इव कुञ्जरस्त्रिधा ॥ १५·४

श्रौती समासगा पूर्णोपमा ।

२२०–स निकामघर्मितमनीकमणमधुवदवधूतराजकः ।
क्षिप्तबहुलजलबिन्दु वपुः प्रलयार्णवोत्थित इवादिसूकरः ॥ १५·५

श्रौती पूर्णोपमा समासगा च ।

२२१–क्षरामाल्लिपद्धटितशैलशिखरकठिनांसमण्डलः ।
स्तम्भमुपहितविघूनिमसौवधिकावधूनितसमस्तसमदम ॥ १५-६

वादिलुप्तोपमा समासगा च ।

२२२–प्रतिरक्तभावमुपगम्य कृतमतिरमुष्य माहमे ।
दृष्टिरगणितभयामिन्नतामवलम्बते स्म ममया मखीमिव ॥ १५-९

श्रौती पूर्णोपमा समासगा च ।

२२३–नरकुड्मलेन निजमुन्मुरनरनगात्मककर्कशम् ।
त्रस्तचपलचलमानजनश्रुतभीमनादमयमाहतोच्चकै ॥ १५-१०

शैलशिलेव कर्कश इति वादिलुप्तोपमा समासगा च ।

२२४–ध्वनयन्सभामथ मनोग्घनरवगभीरवागभी ।
वाचमवददतिरोषवशादतिनिष्ठुरस्फुटनगाक्षरामसौ ॥१५-१३

घनरवगभीरेति वादिलुप्तोपमा ।

२२५–यदराज्ञि राजवदिहार्घ्यमुपहृतमिद मुरद्विपि ।
ग्राम्यमृग इव हविस्तदय भजते ज्वलत्सु न महिशवह्निषु ॥ १५-१५

श्रौती पूर्णोपमा समासगा च ।

२२६–स्वयमेव शान्तनुतनूज यमपि गणामर्घ्यमभ्यधा ।
तत्र मुररिपुरय कतमो यमनिन्द्यवन्दिवदभिष्टुषे वृथा ॥ १५-२०

वन्दीवदिति तद्धितगा आर्थी पूर्णोपमा ।

२२७–त्वयि पूजन जगति जाल्म कृतमिदमपाकृते गुणैः ।
हासकरमघटते नितरां शिरसीव कङ्कतमपेतमूर्धजे ॥ १५-३३

श्रौती पूर्णोपमा समासगा च ।

२२८–मृगविद्विषामिव यदित्यमजनि मिपता पृथासुतैः ।
अस्य वनशुन इवापचितिः परिभाव एव भवतां मुदोऽधिपा. १५-३४

समासगा श्रौतोपमा ।

२२६–अवघोज्जनगम इवैष यदि हतवृषो वृष ननु ।
स्पर्शमशुचिवपुरर्हति न प्रतिमाननातु नितराम् नृपोचिताम् ॥ १५-३५

श्रौती पूर्णोपमा समासगा च ।

२३०–नृपतावधिक्षिपति शौरिमथ सुरसरित्सुतो वच ।
स्माह चलयति भुव मरुति क्षुभितस्य नादमनुकुर्वदम्बुधे ॥ १५-४८

आर्थी वाक्यगा वादिलुप्तोपमा ।

२३१–निशिततारकानुमितताम्रनयनमरुणीकृत क्रुधा ।
बाणवदनमुदवीपि भिये जगत सरीलमिव सूर्यमण्डलम् ॥ १५-४९

श्रौती पूर्णोपमा समासगा च ।

२३२–प्रतिघान्लवेग्दहनेन विरहितवनान्तरार्द्रताम् ।
कोपमरुदभिहतेन भृश नरवारमर्जेन तरुरेव जज्वले ॥ १५-५०

श्रौती पूर्णोपमा समासगा च ।

२३३–अभिधित्सत किमपि राहुवदनविकृत व्यभाव्यत ।
ग्रस्तगगनघरमिवोपलसत्सितदन्तपङ्क्ति मुखमुन्मौजस ॥ १५-५१

राहुवदनविकृतमिति वादिलुप्तोपमा समासगा च ।

२३४–कुपिताकृति प्रथममेव हसितमसतैरसूचयत् ।
कृद्धमनतिदतिनाद्रिनटध्वनि दन्तवक्त्रमरिचक्रभीषणम् ॥ १५-५२

तृतीयपादे वादिलुप्तोपमा समासगा च ।

२३५–कुपितेषु राजसु तथापि रथचरणपाणिपूजया ।
चित्तवनितव न्हासमगा मुदमाहरि: मुहृदिवाधिपा दयौ ॥ १५-५४

समासगा श्रौती पूर्णोपमा ।

२३६–इति तत्तदा विकृतरूपमभजत्तदविभिन्नचेतसाम् ।
मारुताभिव नयंकरता हरिबोधिमस्त्रमपि राजमण्डलम् ॥ १५-५८

समासगा श्रौती पूर्णोपमा ।

२३७–मुहुरिति स्वसन्नथ विनोलसदवथुवपुर्वचोविषम् ।
दीर्णदशनकिरणाग्निकण. फणवानिवेति विससर्ज चेदिप ॥ १५-६२

श्रौती पूर्णोपमा समासगा च ।

२३८–चलित तनोऽनभिरतेच्छमवनिपतियज्ञभूमित ।
तूर्णमथ यज्ञुमिवानुययुर्दमघोषसूनुमवनीशसूनव ॥ १५-६६

पूर्णा श्रौतोपमा समासगा च ।

२३९–जगदन्तकालसमवेतविपदविपमेरितामसमाकुलम् ।
धीरनिजरवविलीनगुरुप्रतिशब्दमस्य रणतूर्यमावधि ॥ १५-७३

वादिलुप्तोपमा समासगा च ।

२४०–महसा ससम्भ्रमविलोलमचलजनतासमाकुलम् ।
स्थानमगमदथ नत्वरितश्चलितोडुमण्डलनभस्तलोपमाम् ॥ १५-७४

आर्थी समासगोपमा ।

२४१–दधतो ससानकतरन्वमुपगतवत. समानताम् ।
धूमपटलपिहितस्य गिरे समवर्मयत्सपदि मेदिनीभृत ॥ १५-७५

आर्थोपमा समासगा च ।

२४२–दधत शराङ्कितगशाङ्करुचि लसदुरश्छद वपु ।
सकृत्य सह पुरन्ध्रिजनैरयथार्थसिद्धि सरक महीभृत ॥ १५-८०

वादिलुप्तोपमा समासगा च ।

२४३–प्रविवत्सत. प्रियतमस्य निगडमिव चक्षुरक्षिपत ।
नीलनलिनदलदामरुचि प्रतिपादयुग्ममचिरोढसुन्दरी ॥ १५-८६

श्रौती पूर्णोपमा समासगा च ।

२४४–सह कज्जलेन विरराज नयनकमलाम्बुसन्तति ।
गण्डफलकसमित· सुतनो. पदवीव शोकमयकृष्णवर्त्मन ॥ १५-९०

श्रौती पूर्णोपमा समासगा च ।

२४५-अनुवर्त्म वल्लभतमस्य विगलदमलायताशुकम् ।
भूमिनभसि रभसेन यती विरराज काचन समं महोल्कया ॥ १५-९

आर्थी वाक्यगा पूर्णोपमा ।

२४६-काश्चित्कीर्णा रजोभिर्दिवमनुविदधे भिन्नवक्त्रेन्दुलक्ष्मी-
रश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः ।
भ्रेमुर्वात्या इवान्याः प्रतिपदमपरा भूमिवत्कम्पमापुः
प्रस्थाने पार्थिवानामशिवमिति पुरो भावि नार्यः शशंसुः ॥ १५-९५

प्रथमे पादे वादिलुप्तोपमा, द्वितीयपादे पूर्णोपमा, तृतीयपादे उपमा
द्वय श्रौती आर्थी च ।

२४७-अधिवह्नि पङ्क्तिजगतो नियतस्वान्तमसमर्थकर्मणः ।
तव सर्वविधेयवर्तिनः प्रणतिं बिभ्रति केन भूभृतः ॥ १६-५

अत्र अधिवह्नीत्यादिविशेषणे लुप्तोपमा समासगा च ।

२४८-घनजालनिभैर्दुरासदाः परितो नागकदम्बकैस्तव ।
नगरेषु भवन्तु वीथयः परिकीर्णा वनजैर्मृगादिभिः ॥ १६-१०

आर्थी पूर्णा समासगार्थोपमा ।

२४९-विकचोत्पलचारुलोचनस्तव चैद्येन घटामुपेयुषः ।
यदुपुङ्गव बन्धुसौहृदात्त्वयि पाता मधुरो नवासव ॥ १६-१२

प्रथमे पादे वादिलुप्तोपमा समासगा च ।

२५०-प्रतिवाचमदत्त केशवः शपमानाय न चेदिभूभुजे ।
अनुहुङ्कुरुते घनध्वनिं न हि गोमायुरुतानि केसरी ॥ १६-२५

द्वितीयपादे समासगा वादिलुप्तोपमा । अन्यत्र श्रौती पूर्णा समासगा

२५१-अकठ मृदु नाम जल्पत परुष सूचयतोऽर्थमन्तरा ।
मधुनादिव मार्गवर्तिभिः पुरुषाद्रुद्विजितव्यमीदृश ॥ १६-२६
पूर्णा श्रौतोपमा ।

२५२—अनिराकृततापसम्पदं फलहीनां सुमनोभिरुज्झिताम् ।
खलतां खलतामिवाऽसतीं प्रतिपद्येत कथं बुधो जनः ॥ १६-२४

श्रौती पूर्णोपमा ।

२५३—विसृजन्त्यविकत्थनाः परे विषमाशीविषवन्नराः क्रुधम् ।
दधतोऽन्तरसाररूपतां ध्वनिसाराः पटहा इवेतरे ॥ १६-३२

पूर्वश्लोकार्धे आर्थी पूर्णा तद्धितगा उत्तरश्लोकार्धे श्रौती पूर्णा समासगोपमा ।

२५४—यदनर्गलगोपुराननस्त्वमतो वदसि किञ्चिदप्रियम् ।
विवरिष्यति तच्चिरस्य न समयोदीक्षणरक्षिता क्रुधम् ॥ १६-३७

अनर्गलेति वादिलुप्तोपमा समासगा च ।

२५५—अथवाऽभिनिविष्टबुद्धिषु व्रजति व्यर्थकतां सुभाषितम् ।
रविरागिषु शीतरोचिषः करजालं कमलाकरेष्विव ॥ १६-४३

पूर्णा श्रौतोपमा ।

२५६—अनिरूपितरूपसम्पदस्तमसो वान्यभृतच्छदच्छवेः ।
तव सर्वगतस्य सम्प्रति क्षितिपः क्षिप्नुरभीशुमानिव ॥ १६-५०

शाब्दी पूर्णोपमा ।

२५७—प्रहितः प्रधनाय माधवानहमाकारयितुं महीभृता ।
न परेषु महौजसश्छलादपकुर्वन्ति मलिम्लुचा इव ॥ १६-५२

श्रौती पूर्णोपमा ।

२५८—उदयं समुपैति भूपतिः पयसां पूर इवाऽनिवारितः ।
अविलम्बितमेधि वेतसस्तलवन्माधव मा स्म भज्यथाः ॥ १६-५३

पूर्वार्धे श्रौती पूर्णोपमा उत्तरार्धे च आर्थी पूर्णा समासगा ।

२५९–अचिराज्जितमीनकेतनो विलसद्वृष्णिगणैर्नमस्कृत ।
क्षितिप क्षपितोद्धताऽन्धको हरलीला स विडम्बयिष्यति ।। १६-५८

अत्र आर्थी पूर्णोपमा वाक्यगा च ।

२६०–तुहिनांशुममुं सुहृज्जनाः कलयन्त्युष्णरुचिं विरोधिनः ।
कृतिभिः कृतदृष्टिविभ्रमाः स्रजमेके भुजगं यथाऽपरे ।। १६-६४

तुहिनांशुममुमिति लुप्तोपमा ।

२६१–दधतोऽसुलभक्षयागमास्तनुमेकान्तरतामसानुपीम् ।
भुवि साम्प्रति न प्रतिष्ठिता सदृशा यस्य सुरैररातयः ।। १६-६५

साहित्यदर्पणमते पूर्णोपमा ।

२६२–नयति द्रुतमुद्धतिश्रित प्रसभं भगमभं गुरोदय ।
गमयत्यवनीतलस्फुरद्भुजशाख भृशमन्यमुन्नितम् ।। १६-७२

भुजशाखेति लुप्तोपमा समासगा च ।

२६३–परितः प्रमिताक्षराऽपि सर्वं विषयं व्याप्तवती गता प्रतिष्ठाम् ।
न खलु प्रतिहन्यते कुतश्चित्परिभाषेव गरीयसी यदाज्ञा ।। १६-८०

श्रौती पूर्णोपमा ।

२६४–इतीरिते वचसि वचस्विनामुना युगक्षयक्षुभितमरुद्गरीयसि ।
प्रचुक्षुभे सपदि तदम्बुराशिना सम महाप्रलयसमुद्यतं सदः ।। १७-१

मरुद्गरीयसीति लुप्तोपमा तदम्बुराशिना समसिति आर्थोपमा ।

२६५–सरागया स्रुतघनघर्मतोयया कराहतिध्वनितपृथूरुपीठया ।
मुहुर्मुहुर्दशनविखण्डितोष्ठया रुषा नृपाः प्रियतमयेव भेजिरे ।। १७-२

श्रौती पूर्णोपमा ।

२६६–प्रजापतिक्रतुनिधनार्थमुत्थितं व्यतर्कयज्ज्वरमिव रौद्रमुद्धतम् ।
समुद्यत सपदि वधाय विद्विषामतिक्रुध नियवमनोपध जन• ॥ १७-७

श्रौता पूर्णोपमा ।

२६७–विवर्तयन्मदकलुषीकृते दृशौ कराहतक्षितिकृतभैरवारव. ।
क्रुधा दधत् तनुमतिलोहिनीमभूत्प्रमेनर्जिद्गज इव गैरिकारुणः ।१७-१३

श्रौती पूर्णोपमा समासगा च ।

२६८–दधौ चलत्पृथुरसनं विवक्षया विदारितं विततवृहद्भुजान्तत. ।
विद्रुथ प्रतिभयमास्यकन्दरं चलत्फणाधरमिव कोटर तरु ॥ १७-१५

श्रौती पूर्णोपमा ।

२६९–पगनमीः यदपवदन्त आत्मन स्तुवन्ति च स्थितिरसतामसाविति ।
मुमोच न प्रकृतिमविस्मित स्मित मुखं दधच्छरदधरमुग्धमुद्धव.॥१७ १६

शरदिन्दुसुन्दरमिति वादिलुप्तोपमा समासगा च ।

२७०–मुहु. प्रतिस्खलितपरायुधा युधि स्थवीयसीश्चलनितम्बभिर्भरा. ।
अदर्शयन्नरहितशौर्यदर्शनास्तनूरय नय इति वृष्णिभूभृत ॥ १७-२१

वादिलुप्तोपमा समासगा च ।

२७१–मुमेखला सितितरदन्तचारव समुल्लसत्तनुपरिवारसम्पद ।
रणैषिणा पुलकभृतोऽधिकन्धर लतान्त्रिरे मदमलिता. प्रिया इव ।१७-२५

साहित्यदर्पणमते पूर्णोपमालंकारः ।

२७२–गभीरताविजितमृदङ्गनादया स्वनश्रिया हतरिपुहर्षसम्पदा ।
प्रमोदयन्नथ मुखरान् कलापिन प्रनिष्ठने नवघनवद्रथ स्म स ।१७-२६

तद्धितगता श्रौती पूर्णोपमा ।

२७३–प्रसिञ्चति प्रशमितपांसुभिर्मही मदाम्बुभिर्धृतनवपूर्णकुम्भया ।
अवादयन् श्रवणसुखं समुन्नमत्पयोधरध्वनिगुरुतूर्यमानकैः ॥ १७-३८

पयोधरध्वनिः इति वादिलुप्तोपमा ।

२७४–यथा यथा पटहरवः समीपतामुपागमत् हरिवरायन नग ।
तथा तथा हृषितवपुर्मुदाकुला द्विषां चमूरजनि जनीव चेतना ॥ १७-४२

श्रौती पूर्णोपमा ।

२७५–प्रसारिणी सपदि नभस्तले ततः समीरणभ्रमितपरागरूषिता ।
व्यभाव्यत प्रलयजकालिकाकृतिर्विदूरतः प्रतिबलकेतनावलिः ॥ १७-४४

वादिलुप्तोपमा समासगा च ।

२७६–पयोमुचामभिपततां दिवि द्रुतं विपर्ययं परित इवातपस्य सः ।
समक्रियः समविषमेष्वथ क्षणात्क्षमातलं बलजलराशिरानशे ॥ १७-४६

श्रौती पूर्णोपमा समासगा च ।

२७७–मृगम्विद पुलकविकासितमूर्तयो रसाधिके मनसि निविष्टसाहसाः ।
मुखे युधः सपदि रतेरिवाभवन्ससम्भ्रमाः क्षितिपचमूवधूगणाः ॥ १७-४८

रतेरिवेति श्रौतोपमा अपरा च पूर्णोपमा ।

२७८–अथोच्चकैर्जरठकपोतकन्धरातनूरुहप्रकरविपाण्डुरद्युति ।
बलैश्चलच्चरणविधूतमुच्चरद्घनावलीरुदचरत क्षमारजः ॥ १७-५२

वादिलुप्तोपमा समासगा च ।

२७९–समुन्नमद्घननिकुरम्बकर्बुरः क्वचिद्धिरण्मयकणपुञ्जपिञ्जरः ।
क्वचिच्छरच्छशधरखण्डपाण्डुरः खुरक्षतः क्षितितलरेणुरुद्ययौ ॥ १७-५६

अनयोरुभयस्य संसृष्टिः ।

२८०—गतेमुखच्छदपटमाहृतो हत पर्यास्थिरो दधति घने रजस्यपि ।
मदानिलैरधिमधुचूतगन्धिभिर्द्विपा द्विपानभिययुरेव रहसा ॥ १७-६७

मुखेत्यादौ आर्थोपमा अधीत्यादौ लुप्तोपमा ।

२८१—सञ्जग्माते तावपायानपेक्षौ सेनाम्भोधी धीरनादौ रयेण ।
पक्षच्छेदात्पूर्वमेकत्र देशे वाञ्छन्तौ वा विन्ध्यसह्यौ निलेतुम् ॥ १८-१

श्रौतोपमा वाक्यगा ।

२८२—पत्तिः पत्तिं वाहमेयाय वाजी नागं नागः स्यन्दनस्थो रथस्थम् ।
इत्थं सेना वल्लभस्येव रागादङ्गेनाङ्गं प्रत्यनीकस्य भेजे ॥ १८-२

वल्लभस्येवेति श्रौती पूर्णोपमा ।

२८३-रोषावेशाद्गच्छतां प्रत्यमित्रं दूरोत्क्षिप्तस्थूलबाहुध्वजानाम् ।
दीर्घास्तिर्यग्वैजयन्तीसदृक्ष पदातस्य भ्रेजिरे खड्गलेखा ॥ १८-४

पूर्णा आर्थ्युपमा समासगा च ।

२८४—सान्द्रत्वक्कास्तत्फलाश्लिष्टकक्षा शार्ङ्गीं शोभामाप्नुवन्तस्तनुत्रैः ।
कल्पस्यान्ते मारुतेनोपनुन्नाश्चेलुश्चण्डं गण्डशैला इवेभा ॥ १८-६

श्रौती पूर्णोपमा ।

२८५—उद्यन्नादं धन्विभिर्निष्ठुराणि स्थूलान्युच्चैर्मण्डलत्वं दधन्ति ।
आस्फाल्यन्ते नामुं कार्मुकाणि स्म कामं हस्त्यारोहैः कुञ्जराणां शिरांसि ।१८-९

उपमानवाचिलुप्तोपमा ।

२८६—रोषावेशादाभिमुख्येन कौचित्पाणिग्राहं रंहसैवोपयातौ ।
हित्वा हेतीर्मल्लवन्मुष्टिघातं घ्नन्तौ बाहूबाहवि व्यामृजेताम् ॥१८-१२

मल्लवदिति तद्धितगता श्रौती पूर्णोपमा ।

२९४–व्याप्तं लोकं दुःखलभ्यापसारं मरम्भित्वादेत्य धीरो महीयः ।
मेनामध्य गाहते वारणः स्म ब्रह्मा व प्रागादिदेवोदरान्तः ॥१८-४०

शाब्दी पूर्णोपमा समासगा च ।

२९५–भृङ्गश्रेणीश्यामभासां समूहैर्नाराचना विद्धनीरन्ध्रदेहः ।
निर्भीकत्वादाहवेनाहतेच्छो हृष्यन्हस्ती हृष्टरोमेव रेजे ॥ १८ ४१

भृङ्गश्रेणीश्यामेति लुप्तोपमा समासगा च ।

२९६–आताम्राभा रोषभाजः कटान्तादाधूरखाते मार्गणे धूर्गतेन ।
निश्च्योतन्ती नागराजस्य जज्ञे दानस्याहोलोहितस्यैव धारा ॥१८ ४२

पूर्णा श्रौतोपमा समासगा च ।

२९७–आमन्दन्तौ दन्तिनः साहसिकयाटीपादण्डौ मृत्युशय्यातलस्य ।
सैन्यं न्यस्तत्क्षणादाशङ्के स्वर्गस्योच्चैरर्धमार्गाधिरूढः ॥ १८-४३

श्रौती वाचकलुप्तोपमा समासगा च ।

२९८–नन्वा पुंसो नन्दगोपात्मजाया कर्मेनेव स्फोटितायाः गजेन ।
दिव्या मूर्तिर्व्योमगैरुत्पतन्ती तीक्ष्णामासे विस्मितैश्चण्डिकेव ॥१८-५०

श्रौती पूर्णोपमा ।

२९९–आक्रम्यैकामग्रपादेन जघामन्यामुच्चैराददानः करेण ।
सास्थिस्वानं दारुवद्दारुणात्मा कश्चिन्मध्यात्पाटयामास दन्ती ॥१८ ५१

समासगा आर्थोपमा ।

३००–पीनः पुन्यादस्रगन्धेन मत्तो मृद्गन्कोपाल्लोकमायोधनोर्व्याम् ।
पादे लग्नामन्त्रमालामिभेन्द्रः पाशीकल्पामायतामाचकर्ष ॥ १८ ५७

पाशीकल्पेत्यत्र तद्धितगता पूर्णोपमा ।

३०१–लूनग्रीवात्सायकेनापरस्य द्यामत्युच्चैराननादुत्पतिष्णोः ।
त्रेसे मुग्धैः सैंहिकेयानुकाराद्रौद्राकारादप्यरोषक्रुधश्चन्द्रे ॥ १८-५६

वादिलुप्तोपमा समासगा ।

३०२–मदानान्तादन्त्रिनि  निक्षिनाम्त्रेणादिस्याघः शातशस्त्रावलूना ।
कुम्भोपम्य व्यक्तमन्तनदानामैभाः प्रापन्नभ्रश्रीस्मृष्टमयीनाम् ॥ १८-७१

समासगा आर्थोपमा ।

३०३–गात्राकारैर्योधवक्त्रैर्निभाना स्वर्गं भ्रष्टैश्चामरैरेव हंसैः ।
सोपस्कारा प्रावहन्नसृत्तोया स्रोतस्विन्यो वीचिवद्भिर्ध्वजैस्तरद्भिः ॥ १८-७२

वादिलुप्तोपमा समासगा च ।

३०४–प्रायल्लीनामविरलरयं राजकानीकिनीना-
मित्थं सैन्यं सममलघुनः श्रीपतेरूर्मिमद्भि ।
आसीदोघैर्मुहुरिव महद्वारिधेरापगाना
दोलायुद्धं कृतगुरुतरध्वाननमौद्धत्यभाजाम् ॥ १८-८०

श्रौती पूर्णोपमा ।

३०५–अथोत्तस्थे रणाटव्यामनुद्धृते गुरुस्विषा ।
नृपाङ्घ्रिपौघसंदीप्तिवद्धे शुद्धाग्निना ॥ १९-१

उपादानाच्चेयमार्थी तद्धितगता पूर्णोपमा ।

३०६–आपतन्तममुं दूरादूर्जितपराक्रमः ।
बलोऽवलोकयामास मातङ्गमिव केसरी ॥ १९-२

श्रौती पूर्णोपमा समासगा च ।

३०७–जजौजोजाजिजिज्जाजी तं ततोऽतितताततुत् ।
भाभोऽभीभाभिभूभाभूरारारिररिरीररः ॥ १९-३

समासगा वादिलुप्तोपमा ।

३०८–भवन्मयाय योधानामारम्भितमहीतल ।
निर्घात इव निर्घोषभीमस्तूर्यापतद्भृश ॥ १९ ४

श्रौती पूर्णोपमा ।

३०९–दिवमर्कमिवावाची मूर्द्धा गजमपाहरत् ।
मन्दध्वनात तं मृत शाघ्रमाजिविहायस ॥ १९-६

श्रौती पूर्णोपमा समासगा च ।

३१०–कृत्वा शिनेः शाल्वचमूं सप्रभावां चमूर्जिताम् ।
ममर्ज वक्त्रं फुल्लाब्जसप्रभा बाणचमूर्जिताम ॥ १९ ७

वादि तुनोपभा समासगा ।

३११–सम स्मस्नशो राज्ञामापतन्तीरनीकिनी ।
कार्ष्णिः प्रत्यग्रहीदेकः सरस्वानिव निम्नगा ॥ १९-१०

वाक्यगा श्रौतोपमा ।

३१२–दधानैर्घनसादृश्य लमदायसदर्शनं ।
तत्र काञ्चनसच्छाया ससृजे तैः शरासनि ॥ १०-११

आर्थी वाक्यगोपमा ।

३१३–तथा कुसुममञ्जरीकीर्णाम्सो तरगिवोन्नके ।
बभौ बिभ्रद्धनु शाखामधिन्दशिलीमुखाम् ॥ १९ १२

शिलीमुखेति श्लिष्टविशेषणेयमुपमा पूर्णा समासगा च ।

३१४–वेगप्रचुर्लोकस्य पर्यस्कारि विकासिना ।
शेखरेणेव युद्धस्य शिर. कुसुमलक्ष्मणा ॥ १९-२०

श्रौती पूर्णोपमा समासगा च ।

३१५–अहितानभि वाहिन्या स मानी चतुरङ्गया ।
चचाल वल्गवल्लभममानीचतुरङ्गया ॥ १९-२५

समासगा श्रौतोपमा ।

३१६–ततस्ततधनुर्मौर्वीविस्फारस्फारनिःस्वनैः ।
तूर्यैर्युगक्षये क्षुभ्यदब्धिपारानुकारिणी ॥ १९-२६

समासगा लुप्तोपमा ।

३१७–विषमं सर्वतोभद्रचक्रगोमूत्रिकादिभिः ।
श्लोकैरिव महाकाव्यं व्यूहैस्तदभवद्बलम् ॥ १९-४१

श्रौती पूर्णोपमा समासगा च ।

३१८–विस्तीर्णमायामवती लोललोकनिरन्तरा ।
नरेन्द्रमार्गं रथ्येव पपात द्विषतां बलम् ॥ १९-४३

श्रौतोपमा पूर्णा समासगा च ।

३१९–अधिनागं प्रजविनो विकासत्पिच्छचारवः ।
पेतुर्बर्हिगणदेशीया शङ्कव प्राणहारिणः ॥ १९-४५

समासगा वादिलुप्तोपमा ।

३२०–पुरः प्रयुक्तैर्युद्धं तच्चलितैर्लब्धशुद्धिभिः ।
आलापैरिव गान्धर्वमदीप्यत पदातिभिः ॥ १९-४७

श्रौती पूर्णोपमा समासगा च ।

३२१–शस्त्रव्रणमयश्रीमदलङ्करणभूषितः ।
ददृशेऽन्यो रावणवदलङ्करणभूषितः ॥ १९-५०

तद्धितगा आर्थी पूर्णोपमा ।

३२२–द्विषद्विशसनच्छेदनिरस्तोरुयुगोऽपरः ।
सिरक्ताश्रं रुमयथा बभूवारुणविग्रहः ॥ १६-५३

वादिलुप्तोपमा समासगा च ।

३२३–भीमतामपरोऽम्भोधिसमेऽधित महाहवे ।
दाशे कोपः शिवस्येव समेधितमहा हवे ॥ १६-५४

श्रौती पूर्णोपमा वाक्यगा च ।

३२४–स्वगुणैराफलप्राप्तेराकृष्य गणिका इव ।
कामुकानिव नालीकांस्त्रिणताः सहसामुचन् ॥ १६-६१

श्रौती पूर्णोपमा समासगा च ।

३२५–रक्तस्रुति जवासूनसमरागामिषुव्यधात् ।
कश्चित्पुरः सपत्नेषु समरागामिषु व्यधात् ॥ १६-६४

वादिलुप्तोपमा समासगा च ।

३२६–गन्धेन रणकाम्यन्तौ दूरादुपगताविभौ ।
ग्नासुरन्तरा दन्ती वरण्डक इवाभवत् ॥ १६-६५

श्रौती पूर्णोपमा समासगा च ।

३२७–भूरिभिर्भारिभिर्भीरा भूभारैरभिरेभिरे ।
भेरीरेभिभिरभ्राभैरभीरुभिरिभैरिभाः ॥ १६-६६

आर्योपमेयम् ।

३२८–रणाङ्गणं सर इव प्लावितं मदवारिभिः ।
गजः पृथुकराकृष्टशतपत्रमलोडयत् ॥ १६-६६

श्रौती पूर्णोपमा समासगा च ।

३२९–येनागमूहे व्रणवत्सरुचा परतोमरैः ।
समत्व स ययौ खङ्गत्सरुचापरतोऽमरैः ॥ १९-७४

आर्थी तद्धितगा पूर्णोपमा ।

३३०–निपानिनसुहृत्स्वामिपितृव्यभ्रातृमातुलम् ।
पाणिनीयमिवालोकि धीरैस्तत्समराजिरम् ॥ १९-७५

श्रौती समासगा पूर्णोपमा ।

३३१–प्रभावि सिन्धवा सन्ध्याभ्रसदृग्रुधिरतोयया ।
हृते योद्धुं जनः पारो स दधदिव रतो ययौ ॥ १९-७६

आर्थी समासगा पूर्णोपमा ।

३३२–चित्रं चापैरपेतज्यैः स्फुरद्रक्तशतह्रदम् ।
पयोदजालमिव तद्वीरानमनमावभौ ॥ १९-७९

श्रौती पूर्णोपमा ।

३३३–अथ वक्षोमणिच्छायाच्छुरितापीतवाससा ।
स्फुरदिन्द्रधनुर्भिन्नतडितेव तडित्वता ॥ १९-८३

अत्र श्रौतोपमा समासगा च ।

३३४–पश्चात्कृतानामप्यस्य नराणामिव पत्रिणाम् ।
यो यो गुणेन संयुक्तः स स कर्णान्तमाययौ ॥ १९-९३

श्रौती पूर्णोपमा समासगा च ।

३३५–नीरालोके कलोऽकल्पकलिलोऽलिकुलालकः ।
कालोऽकलोऽकलिः काले वालकैर्निकिलः किल ॥ १९-९८

वादिलुप्तोपमा समासगा च ।

३३६–परशेऽविवरो वैरिविचारी वारिरारव ।
विपत्रार् वरो वैर वीरो रविरिवोर्वरं ॥ १६-१००

श्रौती पूर्णा समासगोपमा ।

३३७–क्रूरारिकारी कोरेक कारक कारिकाकर ।
कोरकाकारकरक करीरः कर्करोऽर्करुक् ॥ १६-१०४

वाचकलुप्तोपमा समासगा च ।

३३८–आच्छिद्य योधसार्थस्य प्राणसर्वस्वमाशुगाः ।
ऐकागारिकवद्भू मौ दूराज्जग्मुरदर्शनम् ॥ १६-१११

पूर्णा आर्थी समासगोपमा ।

३३६–मदामदबलप्राय समुद्धतरसो बभौ ।
प्रतीतविक्रम श्रीमान्हरिर्हरिरिवापर. ॥ १६-११६

श्रौती पूर्णोपमार्थं नयवाची ।

३४०–अभिचैद्यमगाद्रथोपि शौरेरवनि जागुडकुङ्कुमाभिताम्रं ।
गुरुनेमिनिपीडनावदीर्णव्यसुदेहस्रुतशोणितैर्विलिम्पन् ॥ २० ३

कुंकुमवदभिताम्रं रित्युपमा समासगा च ।

३४१– सजलाम्बुधरारवानुकारी ध्वनिरापूरितदिङ्मुखो रथस्य ।
प्रगुणीकृतकेकमूर्ध्वकण्ठं शितिकण्ठकपकर्णयाम्बभूवे ॥ २०-५

आर्थी समासगोपमा ।

३४२–अनुसन्ततिपातिन. पटुत्व दधत. शुद्धिभृतो गृहीतपक्षा ।
वदनादिव वादिनोऽथ शब्दा. क्षितिभर्तु र्धनुष. शरा. प्रसस्नु ।२०-११

साहित्यदर्पणमते पूर्णोपमा ।

३४३–गवलासितकान्ति तस्य मध्यस्थितघोरायतबाहुदण्डनामम् ।
दहृशे कुपितान्तकोन्नमद्भ्रूयुगभीमाकृति कार्मुकं जनेन ॥ २०-१२

वादिलुप्तोपमा समासगा च ।

३४४–तडिदुज्ज्वलजातरूपपुङ्खैः खमय श्याममुखैरभिध्वनद्भिः ।
जलदैरिव रहसा पतद्भिः पिदधे सहतिशालिभिः शरौघैः ॥ २०-१३

श्रौती पूर्णोपमा समासगा च ।

३४५–इति चेदिमहीभृता तदानीं तदनीकं दनुसूनुसूदनस्य ।
वयसामिव चक्रमक्रियाकं परितोऽरोधि विपाटपञ्जरेण ॥२०-१७

श्रौती पूर्णोपमा ।

३४६–इपुवर्षमनेकमेकवीरस्तदरिप्रच्युतमच्युतः पृपत्कैः ।
अथ वादिकृतं प्रमाणमन्यैः प्रतिवादीव निराकरोत्प्रमाणैः ॥ २०-१८

समासगता श्रौती पूर्णोपमा ।

३४७–प्रतिकुञ्चितकूर्परेण तेन श्रवणोपान्तिकनीयमानगव्यम् ।
ध्वनति स्म धनुर्घनान्तमत्तप्रचुरक्रौञ्चरवानुकारमुच्चैः ॥ २०-१९

आर्थी समासगतोपमा ।

३४८–ध्वनतो नितरां रयेण गुर्व्यस्तडिदाकारचलद्गुणादसंख्याः ।
इषवो धनुषः सशब्दमाशु न्यपतन्नम्बुधरादिवाम्बुधाराः ॥ २०-२१

श्रौतोपमार्थोपमयोः संकरः ।

३४९–शितसरोन्नतनिम्नराससपीठः स्थगयन्नेकदिगन्तमायतान्तः ।
निरवर्णि मवृत्तमारितोऽस्य क्षितिभर्तेव चमूभिरेकबाहुः ॥ २०-२

श्रौती पूर्णोपमा ।

३५०–तमकुण्ठमुखा सुपर्णकेतोरिषव क्षिप्तमिषुव्रजं परेण ।
विभिदामनयन्त कृत्यपक्ष नृपतेर्नेतुरिवायथार्थवर्णा ॥ २०-२३

पूर्णा श्रौतोपमा ।

३५१–दयितैरिव खण्डिता मुरारेर्विमिग्वै समुगमुज्ज्वलाङ्गनेरा ।
लघिमानमुपेयुषी पृथिव्या विफला गगनशरावलि पपात ॥ २०-२४

दयितैरिवेत्युपमा पूर्णा श्रौती च ।

३५२–प्रमुखेऽभिहताश्च पत्रवाहा प्रसभ माधवमुक्तवत्सदन्तैः ।
परिपूर्णतर भुवो गताया परत. कातरवत्प्रतीपमीयु ॥ २०-२५

कातरवदिति तद्धितगता श्रौती पूर्णोपमा ।

३५३–शरदीव शरश्रिया विभिन्ने विभुना शत्रुशिलीमुखाभ्रजाले ।
विकसन्मुखवारिजा. प्रकाश वसुराशा इव यादवध्वजिन्य ॥ २०-२७

चतुर्थपादे श्रौती पूर्णोपमा ।

३५४–गुरुवेगविराविभिः पतत्रैरपतः काञ्चनपिङ्गलाङ्गभाम ।
विनतासुतवत्तलं भुव. स्म व्यथितभ्रान्त भुजगमं विशन्ति ॥ २०-३०

तद्धितगता श्रौती पूर्णोपमा ।

३५५–शतशः परुषाः पुरो विशङ्कं शिशुपालेन शिलीमुखा. प्रयुक्ता ।
परमर्मभिदोऽपि दानवारेरपराधा इव न व्यथा वितेनुः ॥ २०-३१

समासगतोपमा श्रौती पूर्णा च ।

५६–सलिलार्द्रवराहदेहनीलो विदधद्भास्करमर्यशून्यमङ्गम् ।
प्रचलायितलोचनारविन्दं विदधे तद्बलमन्धमन्धकार ॥ २०-३२

वराहदेहनीललोचनारविन्देत्युपमा सा च वादिलुप्ता ।

३६४–पृथुवारिधिवीचिमण्डलान्निर्गलमदण्नविनानपाण्डुराणि ।
दधति स्म भुजङ्गमाङ्गमध्ये नवनिर्मोकरुचि ध्वजांशुकानि ॥ २०-४७

वादिलुप्तोपमा समासगा च ।

३६५–परिवेष्टितमूर्तयश्च मूलादुरगैरागिरि सग्लपुण्ये ।
दधुरायतवल्लिवेष्टितानामुपमानं मनुजा महीरुहाणाम् ॥ २०-४९

आर्थी पूर्णा वाक्यगोपमा ।

३६६–प्रसृतं रभसादयोमिनीला प्रतिपाद परितोऽभिवेष्टयन्ती ।
तनुरायतिशालिनी महाहेर्गजमन्दूरिव निश्चलं चकार ॥ २०-५१

श्रौती पूर्णोपमा ।

३६७–द्रुतहेमरुच महा खगेन्द्रादलघूदीग्निनादमुत्पतन्त ।
क्षणमैक्षिपतोच्चकैश्चमूभिर्ज्वलत महरुचेरिव स्फुलिङ्गा ॥ २०-५३

श्रौती समासगा पूर्णोपमा ।

३६८–उपमानमलम्भि लोलपक्षक्षणविक्षितमहाम्बुवाहमार्गै ।
गगनार्णवमन्तरा सुमेरोः कुलजानां मरुद्भिरिलाधराणाम् ॥ २०-५४

आर्थी पूर्णोपमा वाक्यगा च ।

३६९–अभित क्षुभिताम्बुराशिधीरध्वनिराक्रुष्टसमूलपादपौघ ।
जनयन्नसमयुगान्तशङ्कामनिलो नागविपक्षपक्षजन्मा ॥ २०-५७

वादिलुप्तोपमा समासगा च ।

३७०–खचरैः क्षयमक्षयेऽहिसैन्ये सुकृतं दुष्कृतवत्तदोपनीते ।
अयुगार्चिरिव ज्वलन्रुषाथो रिपुरौदर्चिषमाजुहाव मन्त्रम् ॥ २०-५९

दुष्कृतवदिति तद्धितगता आर्थी पूर्णोपमा । अयुगार्चिरिवेति श्रौती पूर्णोपमा ।

३७१–सहसा दधदुद्धतादृहासश्रियमुच्छ्वासितजन्तुना स्वनेन ।
विततायतहेतिबाहुरुच्चैरथ वेताल इवोत्पपात वह्निः ॥ २०-६०

श्रौती पूर्णोपमा ।

३७२–अनिलोद्धतधूमकेतनोऽसौ रभसादम्बरराहिरोहिताश्वः ।
द्रुतमारतसारथि शिखावान्कनकस्यन्दनसुन्दरश्चचाल ॥ २०-६१

कनकस्यन्दनवद्रम्य इत्युपमा वादिलुप्ता ।

३७३ ज्वलदम्बरकोटरान्तराल बहुलार्द्राम्बुदपत्रबद्धधूमम् ।
परिदीपितदीर्घकाष्ठमुच्चैर्म्नरवद्विश्वमुवोप जातवेदा ॥ २०-६२

नरवदिति तद्धितगार्या पूर्णोपमा ।

३७४–मधुरैरपि भूयसा स मेध्यं प्रथम प्रत्युत वारिभिर्दिदीपे ।
पवमानसखस्तत क्रमेण प्रणयक्रोध इवाशमद्विवादैः ॥ २०-७१

श्रौती पूर्णोपमा ।

३७५–प्रयत प्रशम हुताशनस्य क्वचिदालक्ष्यत मुक्तमूलमर्चि ।
घनभिरप्रहितायुधाभिघातात्त्रुटित पतितैरिवैकपत्रम् ॥ २०-७३

एक पत्रमिवेत्युपमा श्रौती सा ।

३७६–इति नरपतिरस्त्र यद्यदाविश्चकार
प्रकुपित इव रोग क्षिप्रकारी विकारम् ।
भिषगिव गुरुदोषच्छेदिनोपक्रमेण
क्रमविदथ मुरारि प्रत्यहस्तत्तदाशु ॥ २०-७६

श्रौती पूर्णोपमा ।

३७७–काले मित तथ्यमुदर्कपथ्य तथागतस्येव जनः सचेताः ।
विनानुरोधात् स्वहितेच्छयैव महीपतिर्यस्य वचश्चकार ॥ २०-८१

पूर्णा श्रौतोपमा ।

# उपमेयोपमा

१—दधदमकलमेकं खण्डितामानमद्भिः
श्रियमपरमपूर्णामुच्छ्वसद्भिः पलाशैः ।
कलरवमुपगीते षट्पदौघेन धत्त
कुमुदकमलखण्डे तुल्यरूपामवस्थाम् ॥ ११-१५

कुमुदकमलखण्डे पलाशैः इति द्वयोः शब्दयोः क्रमेणोपमानोपमेयभावरूपोपमेयोपमा व्यज्यते ।

२—अपदान्तरं च परितः क्षितिक्षितामपवन्द्रुतभ्रमितहेमनेमयः ।
जनिमारुताञ्चितपरस्परोपमक्षितिरेणुकेतुवसना. पताकिन ॥ १३-४

अत्र परस्परोपमेति विशेषणाद्रेणुवत्केतव.,
केतुवच्च रेणव इत्युपमेयोपमा ।

# स्मरणम्

१—दिव्यानामपि कृतविस्मया पुरस्ता-
दम्भस्तः स्फुरदरविन्दचारुहस्ताम् ।
उद्वीक्ष्य श्रियमिव काचिदुत्तरन्ती-
मस्मार्षीज्जलनिधिमन्थनस्य शौरि. ॥ ८-६४

अत्र समुद्रमन्थनस्मारिकया श्रियमिवेत्युपमया सादृश्याच्छ्री।
स्मृतेति स्मरणालकार. ।

# रूपकम्

१–निवेशयामासिथ हेलयोद्धृतं फणाभृतां छादनमेव मौलिनः ।
जगत्त्रयैकस्थपतिस्त्वमुच्चकैरहीश्वरस्तम्भशिरःसु भूतलम् ॥ १-३४

श्लिष्टाश्लिष्टरूपकयोर्हेतुहेतुमद्भावात् श्लिष्टमालापरंपरितरूपकम्
तच्च समासाभावम् ।

२–करोति कंसादिमहीभृतां वधाज्जनो मृगाणामिव यत्तव स्तवम् ।
हरे ! हिरण्याक्षपुरःसरासुरद्विपद्विप प्रत्युत सा तिरस्क्रिया ॥ १-३६

हरिद्वरिरिति श्लिष्टपरंपरितं केवलरूपकम् ।

३–आज्वलयमाना जगतः शान्तये समुपेयुषी ।
व्यद्योतिष्ट सभावेद्यामसौ नरशिखित्रयी ॥ २-३

सभावेद्यामिति रूपकालंकारः तच्च केवलपरंपरितम् ।

४–त्वया विप्रकृतश्चैद्यो रुक्मिणीं हरता हरे ।
बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः ॥ २-३८

महद्वैरतरोरिति साङ्गरूपकालंकारः तच्च एकदेशविवर्ति ।

५–बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृतिकञ्चुकः ।
चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः ॥ २-८२

मालापरंपरितरूपकम् तच्च अश्लिष्टशब्दनिबंधनम् ।

६–कररुचेयामुत्तुङ्गः प्रभुशक्तिं प्रथीयसीम् ।
प्रज्ञाबलबृहन्मूलः फलत्युत्साहपादपः ॥ २-८६

उत्साहपादप इति साङ्गरूपकम् तच्च समस्तवस्तुविषयम् ।

७-प्रातन्य पार्ष्णिग्राहादिमालायामधिकद्युतिः ।
एकार्थतन्तुप्रोतायां नायको नायकायते ॥ २-९२

पार्ष्णिग्राहादिमालायामिति साङ्गरूपकम् तच्च समस्तवस्तुविषयम् ।

८-षाड्गुण्यमुपयुञ्जीत शक्त्यपेक्षो रसायनम् ।
भवन्त्यस्यैवमङ्गानि स्यास्नूनि बलवन्ति च ॥ २-९३

श्लिष्टपरम्परितरूपकं तच्च केवलम् ।

९-कृत्वा कृत्यविदस्तीर्थेष्वन्तः प्रणिधयः पदम् ।
विदाङ्कुर्वन्तु महतस्तलं विद्विषदम्भसः ॥ २-१११

श्लिष्टपरम्परितमालारूपकम् ।

१०-सहजचापलदोषसमुद्धतश्चलितदुर्बलपक्षपरिग्रहः ।
तव दुरासदवीर्यविभावसौ शलभतां लभतामसुहृद्गणः ॥ २-११७

दुर्बलपक्षपरिग्रहैरिति साङ्गरूपकम् तच्च एकदेशविवर्ति ।

११-इति विशकलितार्थामौद्धवीं वाचमेना-
मनुगतनयमार्गामर्गलां दुर्नयस्य ।
जनितमुदमुदस्थादुच्चकैरुच्छ्रितोर
स्थलनियतनिषण्णश्रीश्रुतां शुश्रुवान् सः ॥ २-११८

अर्गला निवारयित्रीमिति वैधर्म्येण साङ्गरूपकम् एकदेशविवर्ति
तच्च समासाभावम् ।

१२-अम्भश्च्युतः कोमलरत्नराशीनपांनिधिः फेनपिनद्धभासः ।
यत्रातपे दातुमिवोपतल्पं विसारयामास तरङ्गहस्तैः ॥ ३-३६

तरङ्गहस्तैरिति भागरूपकम् तच्च एकदेशविवर्ति ।

१३–मधुकरविटपानमितास्तरुपङ्क्तीर्बिभ्रतोऽस्य विटपानमिताः ।
परिपाकपिशङ्गलतारजसा रोधश्चकास्ति कपिशं गलता ॥ ४-४८

मधुकरविटेति निरङ्गं केवलरूपकम् ।

१४–बिभ्राणया बहलयावकपङ्कपिङ्ग-
पिच्छावचूडमनुमाधवधाम जग्मुः ।
चञ्चत्पुटप्रचटुलालिपताकयान्य
स्वारामभागमुरगाशनकेतुयष्ट्या ॥ ५ १३

तृतीयपादे निरङ्गं केवलरूपकम् ।

१५–नाभिह्रदैः परिगृहीतरयाणि निम्नैः
स्त्रीणां बृहज्जघनसेतुनिवारितानि ।
जग्मुर्जलानि जलमण्डुकवाद्यवल्गु-
वल्गद्घनस्तनतटस्खलितानि मन्दम् ॥ ५-२६

नाभीह्रदैरित्यत्र निरङ्गं केवलरूपकम् ।

१६–अनुवनं वनराजिवधूमुखे बहलरागजवाधरचारुणि ।
विकचबाणदलावलयोऽधिकं रुरुचिरे रुचिरेक्षणविभ्रमाः ॥ ६-४६

समस्तवस्तुविषयं श्लिष्टसाङ्गरूपकम् तच्च आरोप्यमाणाधिकारूढ-
वैशिष्ट्यम् ।

१७–कृतमदं निगदन्त इवाकुलीकृतजगत्त्रयमूर्जमतङ्गजम् ।
ववुरयुग्मच्छदगुच्छसुगन्धयः सततगास्ततगानगिरोऽलिभिः ॥ ६-५०

ऊर्जमतङ्गजमिति साङ्गरूपकम् तच्च समस्तवस्तुविषयमारोप्यमाणा-
धिकारूढवैशिष्ट्यम् ।

१८–स्मितसरोरुहनेत्रसरोजनामतिसिताङ्गविहङ्गहसद्दिवम् ।
प्रकलयन्मुदितामिव सर्वतः स शरदः शरदन्तरदिङ्मुखाम् ॥ ६-४४

सरोजहंसदरेषु नेत्रहासदन्तत्वारोपणाद्रूपकम् तच्च अश्लिष्ट-समस्तवस्तुविषयम्।

१९–भृशमदूयत याऽधरपल्लवक्षतिरनावरणा हिममारुते ।
दशनरश्मिपटेन च सीत्कृतैर्निवसितेव सितेन सुनिर्वृतौ ॥ ६-५९

अधरपल्लव इति भागरूपकम् तच्चाश्लिष्टसमस्तवस्तुविषयम् ।

२०–घनतुषारकणस्य नभस्वतस्तरलताङ्गुलितर्जनविभ्रमाः ।
पृथु निरन्तरमिष्टभुजान्तरं वनितयार्जनिनया न विषेहिरे ॥ ६-६०

तरलतासु अंगुलित्वारोपात् निरंग केवलरूपकं ।

२१–कुसुमयन्फलिनीरलिनीरवैर्मदविकासिभिराहितहुंकृतिः ।
उपवनं निरमत्संयत प्रियान्वियुवतीर्युवती शिशिरानिलः ॥ ६-६२

अलिनीहुंकृतिरिति एकदेशविवर्ति साङ्गरूपकम् तच्च समासाभावम्।

२२–अतिसुरभिरभाजि पुष्पश्रियामतनुतरतयेव सन्तानकः ।
तरुणपरभृतः स्वनं रागिणामतनुत रतये वसन्तानकः ॥ ६-६७

तरुणपरभृत इति समस्तवस्तुविषयसाङ्गरूपकम् तच्चाश्लिष्टसमासाभावम् ।

२३–स्मररागमयी वपुस्तमिस्रा परितस्तार रवेरसत्यवश्यम् ।
प्रियमाप दिवापि कोकिले स्त्री परितस्ताररवे रसत्यवश्यम् ॥ ६-७०

रागतमिस्रेति एकदेशविवर्ति साङ्गरूपकम् तच्चारोप्यमाणाधिकारूढवैशिष्ट्यम् ।

२४–तव सपदि समीपमानये तामहमिति तस्य मयाग्रतोऽभ्यधायि ।
अतिरभसकृतालघुप्रतिज्ञामनृतगिरं गुणगौरि मा कृथा माम् ॥ ७-७

गुणगौरीति श्लिष्टपरंपरितरूपकम् तच्च केवलम् ।

२५–मदरम्यमहौघपूर्णनाभीह्रदपरिवाहितनीमरा नयस्ता ।
सरित इव सविभ्रमप्रयातप्रणदितहंसकभूषणा विरेजु ॥ ७-२३

अत्र समस्तवस्तुविषय साङ्गरूपकम् ।

२६–मधुमथनवधूरिवाह्वयन्ति भ्रमरकुलानि जगुर्यदुत्सुकानि ।
तदभिनयमिवावलिर्वनानामतनुत नूतनपल्लवाङ्गुलीभि ॥ ७-२५

वनानामावलिर्नूतनपल्लवा एवाङ्गुल्य इत्येकदेशविवर्तिसावयव-
रूपकम् ।

२७–विनयति सुदृशो दृश पराग प्रणयिनि कौसुममाननानिलेन ।
तदहितयुवतेरभीक्ष्णमक्ष्णोर्द्वयमपि रोषरजोभिरापुपूरे ॥ ७-५७

रोषरजोभिरिति सागरूपकम् तच्च एकदेशविवर्ति ।

२८–गत्वोद्रेक जघनपुलिने रुद्धमध्यप्रदेश
क्रामन्नूर्ध्वनमुजनता पूर्णनाभीह्रदान्त ।
उल्लङ्घ्योच्चै कुचतटभुव प्लावयन् रोमकूपान्
स्वेदापूरो युवतिसरिता व्याप गण्डस्थलानि ॥ ७-७४

युवतिसरितामिति श्लिष्टसमस्तवस्तुविषयसावयवरूपकम् ।

२९–उत्क्षिप्तस्फुरितसरोरुहार्घ्यमुच्चै सस्नेह विहगरुतैरिवालपन्ती ।
नारीणामथ सरसी सफेनहासा प्रीत्येव व्यतनुत पाद्यमूर्मिहस्तै ८-१४

ऊर्मिहस्तैरिति सागरूपकम् तच्चाश्लिष्टश्लिष्टैकदेशविवर्ति ।

३०–आनाभे सरसि नतभ्रुवावगाढे
चापल्यादथ पयसस्तरङ्गहस्तै ।
उच्छ्रायि स्तनयुगमध्यगेहि लब्ध-
स्पर्शाना भवति कुतोऽथवा व्यवस्था ॥ ८-२२

तरङ्गहस्तैरिति साङ्गैकदेशविवर्ति रूपकम् ।

३१–प्रादातुं दयितमिवावगाढमारा-
दूर्मीणां ततिभिरभिप्रतार्यमाणः ।
कस्याश्चिद्विततचलच्छिखाङ्गुलीको
लक्ष्मीवान् सरसि रराज केशहस्तः ॥ ८-२७

चलच्छिखाङ्गुलीक इति सावयवैकदेशविवर्ति रूपकम् ।

३२–योऽमुष्य त्रिनयनलोचनानलार्चि-
र्निर्दग्धस्मरधृतमाधिराज्यलक्ष्म्या ।
कान्ताया करकलशोद्यतैः पयोभि-
र्वक्त्रेन्दोरकृत महाभिषेकमेकः ॥ ८-३३

करकलशेति साङ्गैकदेशविवर्ति रूपकम् ।

३३–रागान्धीकृतनयनेन नामधेय-
व्यत्यासादभिमुखमीरितः प्रियेण ।
मानिन्या वपुषि पतन्निसर्गमन्दो
भिन्दानो हृदयमभाहि नोदवज्रः ॥ ८-३९

उदवज्र इति केवलनिरवयवरूपकम् ।

३४–पर्यच्छे सरसि हृतांशुके पयोभि-
र्लोलाक्षे सुरतगुरावपत्रपिष्णोः ।
सुश्रोण्या दलवसनेन वीचिहस्त-
न्यस्तेन द्रुतमकृताब्जिनी सखीत्वम् ॥ ८-४६

अत्राऽब्जिन्यादिषु सखीत्वाद्यारोपात्समस्तवस्तुवृत्ति सावयवरूपकम् ।

३५–विरलातपच्छविरनुष्णवपुः परितो विपाण्डु दधदभ्रशिरः ।
अभवद्गतः परिणतिं शिथिलः परिमन्दसूर्यनयनो दिवसः ९-३

अभ्रशिर इति सावयवैकदेशविवर्ति रूपकम् ।

३६–अनुरागवन्तमपि लोचनयोर्दधतं वपुः सुखमतापकरम् ।
निरकासयद्रविमपेतवसुं वियदालयादपरदिग्गणिका ॥ ९-१०

वियदालयादिति मात्रयत्रैकदेशविवर्ति रूपकम् तच्च श्लिष्टम् ।

३७–अभितिग्मरश्मि चिरमाविषयादवधानखिन्नमनिमेषतया ।
विगलन्मधुव्रतकुलाश्रुजलं न्यमिमीलदब्जनयनं नलिनी ॥ ९-११

अब्जनयनमिति साङ्गैकदेशविवर्ति रूपकम् तच्च अश्लिष्टम् ।

३८–पतिते पतङ्गमृगराजि निजप्रतिबिम्बरोषित इवाम्बुनिधौ ।
अथ नागयूथमलिनानि जगत्परितस्तमांसि परितस्तरिरे ॥ ९-१८

पतङ्गमृगराजीति साङ्गैकदेशविवर्ति रूपकम् ।

३९–कलया तुषारकिरणस्य पुरः परिमन्दभिन्नतिमिरौघजटम् ।
क्षणमभ्यपद्यत जनैर्न मृषा गगनं गणाधिपतिमूर्तिरिति ॥ ९-२७

तिमिरौघजटमिति साङ्गैकदेशविवर्ति रूपकम् अश्लिष्टं च तत् ।

४०–अथ लक्ष्मणानुगतकान्तवपुर्जलधिं व्यतीत्य शशिदाशरथिः ।
परिवारितः परित ऋक्षगणैस्तिमिरौघराक्षसकुलं बिभिदे ॥ ९-३१

समस्तवस्तुवर्तिसावयवरूपकालङ्कारः ।

४१–दिवसं मृगोष्णरुचिपादहता रुदतीमिवानवरतालिरुतैः ।
मुहुरामृशन् मृगधरोऽग्रकरैरुदशिश्वसत् कुमुदिनीवनिताम् ॥ ९-३४

श्लिष्टैकदेशविवर्तिमालारूपकम् ।

४२–अमृतद्रवैर्विदधदब्जदृशामपमार्गमोषधिपतिः स्म करैः ।
परितो विसर्पि परितापि भृशं वपुषोऽवतारयति मानविषम् ॥ ९-३६

श्लिष्टसमस्तवस्तुविषयवर्तिमालारूपकम् ।

४३–कदलीप्रकाण्डरुचिरोरुतरौ जघनस्थलीपरिसरे महति ।
रशनाकलापकगुणेन वधूर्मकरध्वजद्विरदमाकलयत् ॥ ९-४५

समस्तवस्तुवर्ति सावयवरूपकम् तच्चाश्लिष्टम् ।

४४–स्फुरदुज्ज्वलाधरदलैर्विलसद्दशनांशुकेसरभरैः परितः ।
घनमुग्धगण्डफलकैर्विबभुर्विकसद्भिरास्यकमलैः प्रमदाः ॥ ९-४७

एकदेशविवर्ति सावयवरूपकम् ।

४५–सोष्मणः स्तनशिलाशिखराग्रादात्तघर्मसलिलैस्तरुणानाम् ।
उच्छ्वसत्कमलचारुषु हस्तैर्निम्ननाभिसरसीषु निपेते ॥ १०-५८

स्तनशिलाशिखरैरिति एकदेशविवर्ति साङ्गरूपकम् ।

४६–प्राप्यते स्म गतचित्रकचित्रैश्चिरमार्द्रनखलक्ष्म कपोलैः ।
दर्शितेऽथ रसमच्युतपुष्पाः स्वेदबिन्दुकुसुमान्यलकान्ताः ॥ १०-७८

स्वेदबिन्दुकुसुमेति एकदेशविवर्तिसाङ्गरूपकम् तच्चाश्लिष्टम् ।

४७–अविरतरतलीलायासजातश्रमाणा-
मुपशममुपयान्तं निःसहेऽङ्गेऽङ्गनानाम् ।
पुनरुपसि विविक्तैर्मातरिश्वावचूर्ण्य
ज्वलयति मदनाग्निं मालतीनां रजोभिः ॥ ११-१७

मदनाग्निमिति निरङ्ग केवलरूपक ।

४८–शिशिरकिरणकान्तं वासरान्तेऽभिसार्य
श्वसनसुरभिगन्धिः साम्प्रतं सत्वरेव ।
व्रजति रजनिरेषा तन्मयूखाङ्गरागं
परिमलितमनिन्द्यैरम्बरान्तं वहन्ती ॥ ११-२१

शिशिरकिरणकान्तेति एकदेशविवर्ति रूपकम् तच्चाश्लिष्टार्थम् ।

४६–कृतगुरुतरहारच्छेदमालिङ्‌ग्य पत्यौ
परिशिथिलितगात्रे गन्तुमापृच्छमाने ।
विगलितनवमुक्तास्थूलबाष्पाम्बुबिन्दु-
स्तनयुगमबलायास्तत्क्षणं रोदितीव ॥ ११-३८

मुक्तास्थूलबाष्पाम्बुबिन्दु इति अभेदप्रधानाद्रूपकम् तच्चैकदेश-
विवर्ति सावयवम् ।

५०–विनतपृथुवरत्रातुल्यरूपैर्मयूखै
कलश इव गरीयान् दिग्भिराकृष्यमाणः ।
कृतचपलविहङ्गालापकोलाहलाभि-
र्जलनिधिजनमध्यादेष उत्तार्यतेऽर्कः ॥ ११-४४

विहङ्गालापकोलाहलेति केवलनिरङ्गरूपकम् ।

५१–उदयशिखरिशृङ्गप्राङ्गणेष्वेष रिङ्गन्
सकमलमुखहासं वीक्षितः पद्मिनीभिः ।
विततमृदुकराग्रः शब्दयन्त्या वयोभिः
परिपतति दिवोऽङ्के हेलया बालसूर्यः ॥ ११-४७

मालादिलष्टपरंपरितरूपकम् तच्च समासाभावम् ।

५२–परिणतमदिराभं भास्करेणांशुबाणै-
स्तिमिरकरिघटायाः सर्वदिक्षु क्षताया ।
रुधिरमिव वहन्त्यो भान्ति बालातपेन
च्छुरितमुभयरोधोवारितं वारि नद्यः ॥ ११-४६

आर्थैकदेशविवर्ति साङ्गरूपकम् ।

५३–भग्नद्रुमाश्चक्रुरितस्ततो दिशः समुल्लसत्केतनकाननाकुलाः ।
पिष्टाद्रिपृष्ठास्तरसा च दन्तिनश्चलन्निजाङ्गाचलदुर्गमा भुवः ।।१२-४६

एकदेशविवर्ति साङ्गरूपकम् ।

५४–अलमर्मदेन सुहृदः शरीरकैः स्वगृहान्प्रति प्रतिययुः शनैः शनैः ।
अलघुप्रसारितविलोचनाञ्जलिद्रुतपीतमाधवरसौघनिर्भरैः ॥ १३-४८

विलोचनाञ्जलीति निरंगं केवलरूपकम् ।

५५–निलयेषु नक्तमसिताश्मनां चयैर्बिसिनीवधूपरिभवस्फुटागसः ।
मुहुरुन्मद्भिरपि यत्र गौरवाच्छशलाञ्छनांशव उपांशु जघ्निरे ॥ १३-५४

बिसिनीवधूरिति एकदेशविवर्ति साङ्गरूपकम् ।

५६–मर्त्यलोकदुरवापमवाप्तरसोदयं
नूतनत्वमतिरक्तनयानुपदं दधत् ।
श्रीपतिः पतिरसाववनेश्च परस्परं
संकथामृतमनेकमसिस्वदतामुभौ ॥ १३-६६

संकथामृतमिति केवलनिरंगरूपकम् ।

५७–मन्त्रतन्तुमविगन्तुमिच्छतः कुर्वनुग्रहमनुज्ञया मम ।
मूलतामुपगते प्रभो त्वयि प्रापि धर्ममयवृक्षता मया ॥ १४-६

धर्मवृक्षत्वेन एकदेशविवर्तिसावयवरूपकम् ।

५८–यत्त्वयेह यजने न भूपतिः कर्म कर्मकरवत् करिष्यति ।
तस्य नेष्यति वपुः कबन्धतां बन्धुरेष जगतां सुदर्शनः ॥ १४-१६

सुदर्शने बन्धुत्वरूपणाद् रूपकम् तच्च केवलनिरवयवम् ।

५९–नीलहेतिरत्नमालसमनालम्बनेन लसता हसन्निव ।
प्राज्यमाज्यमसकृद्वषट्कृतं निर्मलीममलोऽपि पावकः ॥ १४-२५

हेतिरत्नेनेति उपमानोपमेयोरभेदात् एकदेशविवर्तिसाङ्गरूपकम् ।

६०–वारिपूर्वमखिलासु सत्क्रियालब्धशुद्धिषु धनानि बीजवत् ।
भावि बिभ्रति फलं महद्द्विजक्षेत्रभूमिषु नराधिपोऽवपत् ॥ १४-३४

द्विजक्षेत्रभूमिषु इति एकदेशविवर्तिसाङ्गरूपकम् ।

६१–कनकाङ्गदद्युतिभिरस्य गमितमरुणत्वमुद्गताम् ।
क्रोधमयशिखिशिखापटलैः परितः परीतमिव बाहुमण्डलम् ॥ १५-९

क्रोधमयशिखीति निरंग केवलरूपकम् ।

६२–प्रथमं शरीरजविकारकृतमुकुलबन्धमव्यथी ।
भाविकलहफलयोगमसौ वचनेन कोपकुसुमं व्यचीकसत् ॥ १५-१२

समस्तवस्तुवर्तिसावयवरूपकम् तच्चाश्लिष्टम् ।

६३–विवृतोरुबाहुपरिघेण सरभसपदं निपित्सता ।
हन्तुमखिलनृपतीन् यमुना वसने विलम्बिनि निजे विचस्खले ॥ १५-२७

बाहुपरिघेति एकदेशविवर्ति सागरूपकम् ।

६४–स्फुरमाणनेत्रकुसुमोष्ठदलमभृत भूभृदङ्घ्रिपः ।
धूतपृथुभुजलतः चलितैर्द्रुतवातयानवनविभ्रमं सदः ॥ १५-६०

मालश्लिष्टपरम्परितरूपकम् ।

६५–सह कज्जलेन विरराज नयनकमलाम्बुसन्ततिः ।
गण्डफलकमभितः सुतनोः पदवीव शोकमयकृष्णवर्त्मनः ॥ १५-८०

शोकमयकृष्णवर्त्मेति निरंग केवलरूपकम् ।

६६–चलितोर्ध्वकबन्धसम्पदो मकरव्यूहनिरुद्धवर्त्मनः ।
अतरत्स्वभुजौजसा मुहुर्महतः सङ्गरसागरानसौ ॥ १६-६७

अत्र केवलं श्लिष्टपरम्परितरूपकम् ।

६७–पिपासितानामथ मधुभिद्विवस्वता जनो जरन्महिषविषाणधूसराम् ।
पुरः पतत्परबलरेणुमालिनीमलक्षयद्दिनमभिधूमितामिव ॥ १७-४१

मधुभिद्विवस्वेति केवलनिरंगरूपकं तच्च विषयाधिकारद्वैशिष्ट्यम्

६८–महीयसा महति दिगन्तदन्तिनामनीकजे रजसि मुखानुषङ्गिणि ।
विसारितामजिहत कोकिलावलीमसा जलदमदाम्बुराजय: ॥ १७-५७

अत्र समस्तवस्तुवर्ति सावयवरूपकम् मुखमेव मुखमिति श्लिष्ट-परम्परितमिति भङ्कर: ।

६९–समुल्लसद्दिनकरवक्त्रकान्तयो रजस्वला: परिमलिताम्बरश्रिय: ।
दिगङ्गना: क्षणमविलोकनक्षमा: शरीरिणां परिहरणीयतां ययु: ।१७-६१

श्लिष्टपरम्परितमालारूपकमत्र ।

७०–अन्यूनोन्नतयोऽतिमात्रपृथव: पृथ्वीधरश्रीभृत-
स्तन्वन्त: कनकावलीभिरुपमां सौदामनीदामभि: ।
वर्षन्त: शममानयन्नुपलसच्छृङ्गारलेखायुधा:
काले कालियकायकालवपुष: पांसूनगजाम्भोमुच: ॥ १७-६९

गजाम्भोमुच इति केवलाश्लिष्टपरंपरितरूपकम् ।

७१–रोदोरन्ध्रं व्यश्नुवानानि लोलैरङ्गस्यान्तर्मापितं स्थावराणि ।
केचिद्गुर्वीमेत्य सयन्निपद्यां क्रीणन्ति स्म प्राणमूल्यैर्यशांसि ॥ १८-१५

संयन्निपद्येति निरङ्गकेवलरूपकम् ।

७२–आपामासे मत्सरोत्पातवाताश्लिष्यद्दन्तक्ष्मारुहा पर्वणोऽर्यं ।
योगान्तर्वा वह्निभिर्वारणानामुच्चैर्मूर्धव्योम्नि नक्षत्रमाला ॥ १८-३५

दन्तक्ष्मारुहामित्यभेदाद्रूपकम् तच्चाश्लिष्टकेवलपरम्परितम् ।

७३–लूनग्रीवात्सायकेनापरस्य द्यामत्युच्चैराननादुत्पतिष्णो ।
अमेे मुग्धं सैंहिकेयानुकाराद्रौद्राकारादप्सरोवक्त्रचन्द्रै: ॥ १८-५९

वक्त्रचन्द्रैरिति केवलनिरङ्गरूपकम् ।

७४–पद्माकारैर्योधवक्त्रैरिभाना कर्णभ्रष्टैश्चामरैरेव हंसै: ।
सोपस्कारा प्रावहन्नसतोया: स्रोतस्विन्यो वीचिमूच्चैस्तरद्भि: ।१८-७२

चामरैरेव हंसै: इति उपात्तरूपकम् तच्च एकदेशविवर्तिसावयवम् ।

७५–ग्लानिच्छेदी क्षुत्प्रबोधाय पीत्वा रक्तारिष्टं शोणिताजीर्णदोषम्।
स्वादुङ्कारं कालखण्डोपदंशं क्रोष्टा डिम्बं व्यध्वरण्व्यस्वनच्च ।१८-७७

रक्तमेवारिष्टं केवलनिरंगरूपकम् ।

७६–रामे रिपुः शरानाजिमहेष्वास विचक्षणे ।
कोपादधैन शितया महेष्वा स विचक्षणे ॥ १९-५

आजिमहेषु इति केवलनिरंगरूपकम् ।

७७–दधानैर्घनसादृश्य लसदायसदंशनैं ।
तत्र काञ्चनसच्छाया ससृजे तैं शराशनिः ॥ १९-११

शराशनिरिति अभेदात् केवलनिरंगरूपकम् ।

७८–बाणाहिपूर्णतूणीरकोटरैर्धन्विशाखिभिः ।
गोधाश्लिष्टभुजाशाखैरभूद्भीमा रणाटवी ॥ १९-२९

गोधा एव गोधा इति श्लिष्टरूपकम् । समस्तवस्तुवर्णनात्सावयवरूपकम् ।

७९–वरणागगभीरा सा साराऽभीगगणारवा ।
कारितारिवधा सेना नामेधा वरितारिका ॥ १९-४४

वारणमेति निरंगकेवलरूपकम् ।

८०–अन्तकस्य पृथौ तत्र दायनीय इवाहवे ।
दशनव्यसनादीयुर्मत्कुणत्वं मतङ्गजा ॥ १९-७१

मतंगजा. मत्कुणत्वमिति केवलाश्लिष्टपरम्परितरूपकम् तच्च समासाभावम् ।

८१–दारी दरदरिद्रोऽरिदारुदारोऽद्रिदूरदः ।
दूरादराद्रोऽद्दरद्रोदोरुद्दारुदरादरी ॥ १९-१०६

अरिदारौ इति केवलनिरंगरूपकम् ।

८२–प्रत्यं मानविशिष्टमाजिरमनादालम्ब्य भव्य पुरो
लब्धाघक्षयशुद्धिरुद्धुरतरश्रीवत्सभूमिर्मुदा।
मुक्त्वा काममपास्तभीः परमृगव्याध स नाद हरे-
रेकौघे समकालमभ्रमुदयी रोपैस्तदा तस्तरे॥ १९-१२०

परमृगव्याध इति एकदेशविवर्ति साङ्गरूपकम्।

८३–शितचक्रनिपातसम्प्रतीक्षं वहत स्कन्धगतं च तस्य मृत्युम्।
अभिशौरि रथोऽस्य नोदिताश्व- प्रययौ सारथिरूपया नियत्या॥२०-२

सारथिरूपया नियत्येति समासाभावरूपकम् तच्च केवलनिरवयवम्।

८४–सलिलार्द्रवराहदेहनीलो विदधद्भास्करमर्त्यशून्यमंशम्।
प्रचलायित लोचनारविन्दं विदधे सद्बलमन्धकारः॥ २०-३३

लोचनारविन्दमिति उपमानोपमेयोऽभेदरूपकम् तच्चैकदेशविवर्ति।

८५–कृतदाहमुदर्चिषः शिखाभिः परिषिक्तं मुहुरम्भसा नवेन।
विगताम्बुधरव्रणं प्रपेदे गगनं तापितपायितासिलक्ष्मीम्॥ २०-५५

अम्बुधरव्रणेति एकदेशविवर्ति साङ्गरूपकम्।

८६–शुद्धिं गतैरपि परामृजुभिर्विदित्वा
बाणैरजय्यमविघट्टितमर्मभिस्तम्।
मर्मातिगैरनृजुभिर्नितरामशुद्धै-
र्वाक्सायकैरथ तुतोद तदा विपक्षः॥ २०-७७

वाक्सायकैरिति केवलनिरंगरूपकम् तच्च वैयधिकरणम्।

# परिणामः

१–सोपधानां धिय धीराः स्थेयसी खट्वयन्ति ये ।
तत्रानिशं निषण्णास्ते जानते जातु न श्रमम् ॥ २-७७

धिय श्रमापनोदरूपोपकारात् तुल्याधिकरणपरिणामालंकारः ।

२–समीरशिशिर शिरःसु वसता सता जवनिकाः निकामसुखिनाम् ।
दिभर्ति जनयन्नय मुदमपामपायधवला बलाहकतती : ॥४-५४

बलाहकततिषु मुद जनयन्तिति प्रकृतोपयोगिवर्णनात् तुल्याधिकरण-परिणामालकारः ।

३–इत्थं नारीर्घटयितुमल कामिभि काममास-
न्प्रालेयांशो. सपदि रुचय. शान्तमानान्तराया ।
आचार्यत्वं रतिषु विलसन्मन्मथश्रीविलासा
ह्रीप्रत्यूहप्रशमकुशला सीधवश्चक्रुरासाम् ॥ ६-८७

अत्र प्रकृतोपयोगिवर्णनाद् व्यधिकरणपरिणाम ।

४–अरुणजलजराजीमुग्धहस्ताग्रपादा
बहलमधुपमालाकज्जलेन्दीवराक्षी ।
अनुपतति विरावैः पत्रिणा व्याहरन्ती
रजनिमचिरजाता पूर्वसंध्या सुतेव ॥ ११-४०

विरावैर्व्याहरन्तीति व्यधिकरणपरिणामः ।

५–मृग्यमाणमपि यद्दुरासद भूरिसारमुपनीय तत्स्वयम् ।
आगतावसरकाद्क्षिणो बहिस्तस्य रत्नमुपदीकृत नृपा. ॥ १४-३६

अत्र रत्ने प्रकृतोपयोगाद् व्यधिकरणपरिणाम ।

# संदेहः

१–गतं तिरश्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः ।
पतत्यधो धाम विसारि सर्वतः किमेतदित्याकुलमीक्षितं जनैः ॥ १-२

निश्चयगर्भो नाम संदेहालंकारस्य भेदोऽयम् ।

२–किं तावत्सरसि सरोजमेतदारा-
दाहोस्विन्मुखमवभासते युवत्याः ।
संशय्य क्षणमिति निश्चिकाय कश्चि-
द्विब्बोकैर्बकसहवासिनां परोक्षैः ॥ ८-२९

निश्चयान्तसन्देहालंकारोऽयम् ।

३–व्यसरन्नु भूधरगुहान्तरतः पटलं बहिर्वहलपङ्करुचि ।
दिवसावसानपटुनस्तमसो बहिरेत्य चाधिकमभक्त गुहा ॥ ९-१९

अत्र संशयपर्यवसानात् शुद्धसन्देहालंकारः ।

४–किमलम्बताम्बरविलग्नमधः किमवर्धतोर्ध्वमवनीतलतः ।
विससार तिर्यगथ दिग्भ्य इति प्रचुरीभवन्न निरधारि तमः ॥ ९-२०

सन्देहपर्यवसानात् शुद्धसन्देहालंकारोऽयम् ।

५–अप्रसन्नमपराद्धरि पत्यौ कोपदीप्तमुररीकृतधैर्यम् ।
क्षालितं नु शमितं नु वधूनां द्रावितं नु हृदयं मधुवारैः ॥ १०-१४

क्षालितं द्रावितमिति शुद्धसंदेहोऽयम् ।

६–लब्धसौरभगुणो मदिराणामङ्गनास्यचषकस्य च गन्धः ।
मोदितालिरितरेतरयोगादन्यतामभजतातिशयं नु ॥ १०-२८

अत्रादौ संशयात् मध्ये निश्चयाच्च निश्चयगर्भसंदेहालंकारः ।

७-आताम्राभा रोषभाजः कटान्तादाशूत्याते मार्गणे धूर्गतेन ।
निश्च्योतन्ती नागराजस्य जज्ञे दानस्याहोलोहितस्येव धारा ॥१८-४८

अत्र संशयपर्यवसानात् शुद्धसदेहालंकारः ।

— —

# भ्रान्तिमान्

१-शुकाङ्गनीलोपलनिर्मितानां लिप्तेषु भासा गृहदेहलीनाम् ।
यस्यामलिन्देषु न चक्रुरेव मुग्धाङ्गना गोमयगोमुखानि ॥ ३-४८

मरकतप्रभाया विलेपनभ्रान्त्येति भ्रान्तिमदलंकारः ।

२-चिक्र सया कृत्रिमपत्रिपङ्क्तेः कपोतपालीषु निकेतनानाम् ।
मार्जारमप्यायतनिश्चलाङ्गं यस्यां जनः कृत्रिममेव मेने ॥ ३-५१

अत्र कविकल्पितसादृश्यात् विपरीतमतिवर्णनाद् भ्रान्तिमदलंकारः ।

३-भिन्नेषु रत्नकिरणैः किरणेष्विहेन्दो-
रुच्चावचैरुपगतेषु सहस्रमस्याम् ।
दोषापि नूनमहिमांशुरसौ किलेति
व्याकोशकोकनदतां दधते नलिन्यः ॥ ४-४९

अत्र इन्दोरहिमांशुभ्रान्त्या भ्रान्तिमदलंकारः ।

४-अन्योन्यव्यतिकरचारुभिर्विचित्रै-
रत्रन्यस्तवमणिजन्मभिर्मयूखैः ।
विस्मेरान् गगनसदः करोत्यमुष्मि-
न्नाकाशे रचितमभित्ति चित्रकर्म ॥ ४-५३

आकाशे रचितचित्रकर्मणि भ्रान्तिमदलंकारः ।

५–आत्मानमेव जलधेः प्रतिबिम्बिताङ्ग-
मूर्मौ महत्यभिमुखापतितं निरीक्ष्य ।
क्रोधादधावदपभीरभिहन्तुमन्य-
नागाभियुक्त इव युक्तमहो महेभः ॥ ५-३२

प्रतिगजभ्रान्तिनिबन्धनत्वाद् भ्रान्तिमान् ।

६–इदमपास्य विरागि परागिणीरलिकदम्बकमम्बुरुहां ततीः ।
स्तनभरेण जितस्तबकानमन्नवलतेवलतेऽभिमुखं तव ॥ ६-११

अम्बुरुहां ततीरपास्य तवाऽभिमुखं वलते इति भ्रान्तिमदलंकारः ।

७–श्रुतिपथमधुराणि सारसानामनुनदि शुश्रुविरे रुतानि ताभिः ।
विदधति जनतामनःशरव्यव्यधपटुमन्मथचापनादशङ्काम् ॥ ७-२४

अत्र सारसरुते मन्मथचापनादभ्रमाद् भ्रांतिमदलंकारः ।

८–पतिते पतगमृगराजि निजप्रतिबिम्बरोषित इवाम्बुनिधौ ।
अथ नागयूथमलिनानि जगत्परितस्तमांसि परितस्तरिरे ॥ ९-१८

नागयूथमलिनानि तमांसि परितः इति भ्रमात् भ्रान्तिमान् ।

९–प्रतिकामिनीति ददृशुश्चकिता स्मरजन्मघर्मपयसोपचिताम् ।
सुदृशोऽभिभर्तृ शशिरश्मिगलज्जलबिन्दुमिन्दुमणिदारवधूम् ॥ ९-३५

अत्र प्रतिकामिनीभ्रान्त्या भ्रान्तिमदलंकारः ।

१०–बिम्बितं भृतपरिस्रुति जानन् भाजने जलजमित्यबलायाः ।
घ्रातुमक्षि पतति भ्रमरः स्म भ्रान्तिभाजि भवति क्व विवेकः ॥ १०-५

अत्र भ्रमरस्याऽक्षिजलभ्रान्तेर्भ्रान्तिमदलंकारः ।

११–सितरुचि शयनीये नक्तमेकान्तमुक्तं
दिनकरकरसङ्गव्यक्तकौसुम्भकान्ति ।

निजमिति रतिबन्धोर्जानतीमुत्तरीय
परिहसति सखी क्षौमाददाना दिनादौ ॥ ११ ५२

अत्राञ्जौमुम्भे कौसुम्भभ्रमात् भ्रान्तिमदलङ्कार ।

१२–द्रुतमध्वनन्नुपरिपाणिवृनय पणवा इवाश्वचरणक्षता भुव ।
ननृतुश्च वारिधरधीरवारणध्वनिहृष्टकूजितकला कलापिन ॥ १३-५

गजबृंहितेषु घनगर्जिताद् भ्रान्तिमदलङ्कार ।

१३–रभसेन हारपददत्तकाञ्चय प्रतिमूर्धजं निहितकर्णपूरका ।
परिवर्तिताम्बरयुगा समापतन्वलयीकृतश्रवणपूरका स्त्रिय ॥ १३-३१

त्वरयाकाले भूषास्थानविपर्यये भ्रान्तिमदलङ्कार ।

१४–वलयार्पितासितमहोपलप्रभाबहुलीकृतप्रतनुरोमराजिना ।
हरिवीक्षणाक्षणिकचक्षुषान्यया करपल्लवेन गलदम्बर दधे ॥ १३-४४

असितमहोपलप्रभाणा रोमराजित्वप्रतीतेर्भ्रान्तिमदलङ्कार ।

१५–नवगन्धवारिविरजीकृता पुरो घनधूपधूमकृतरेणुविभ्रमा ।
प्रचुरोद्धतध्वजविलम्बिवासस पुरवीथयोऽथ हरिणातिपेतिरे ॥ १३-४८

अत्र सादृश्याद् धूरेणुभ्रान्त्या भ्रान्तिमदलङ्कार ।

१६–तृणवाञ्छया मुहुरवाञ्चिताननानिचयेषु यत्र हरिताश्मवेश्मनाम ।
रसनाप्रलग्नकिरणाङ्कुराञ्जनो हरिणान्गृहीतकवलान्निवेक्षत ॥ १३ ५६

अत्र हरिताश्मसु तृणभ्रान्तेर्भ्रान्तिमदलङ्कार ।

१७–हसितु परेण परित परिस्फुरत्करवालकोमलरुचावुपेक्षित ।
उदवापि यत्र जलशङ्कया जनैर्मुहुरिन्द्रनीलभुवि दूरमम्बरम् ॥ १३-६०

अत्रेन्द्रनीलस्थलसादृश्यात्सलिलभ्रान्तेर्भ्रान्तिमदलङ्कार ।

१८-क्षणमाश्ररोधि चलितेन कतिपयपद नतभ्रुव ।
न्यस्तभुजयुगगलद्वलयस्वनित प्रति क्षुतमिवोपशुश्रुवे ॥ १५-६१

स्वनित प्रतिक्षिताद् भ्रान्त्या भ्रान्तिमदलकार ।

१९-उत्प्लुत्याराादर्धचन्द्रेण लूने वक्त्रेऽन्यस्य क्रोधदष्टौष्ठदन्ते ।
सैन्यै कण्ठच्छेदलीने कबन्धाद्भूयो विभ्ये वल्गत सासिपाणे. ।१८-५३

कबन्धादप्यकबन्धभ्रान्त्या भ्रान्तिमदलकार ।

२०-जनिताशनिशब्दशङ्कमुच्चैर्धनुरास्फालितमध्वनन्नृपेण ।
चपलानिलबोध्यमानकल्पक्षयकालाग्निशिखानिभस्फुरज्ज्यम् । २०-७

अत्र अशनिशब्दशङ्काभ्रान्त्या भ्रान्तिमदलकार ।

---

# अपह्नुतिः

१-ओमित्युक्तवतोऽथ शार्ङ्गिण इति व्याहृत्य वाच नभ-
स्तस्मिन्नुत्पतिते पुर सुरमुनाविन्दो. श्रिय बिभ्रति ।
शत्रूणामनिश विनाशपिशुन. क्रुद्धस्य चैद्य प्रति ।
व्योम्नीव भ्रुकुटिच्छलेन वदने केतुश्चकारास्पदम् ॥ १-७५

भ्रुकुटिच्छलेन केतुरिति आरोपपूर्वकोऽपह्नव ।

२-गुरुनिविडनितम्बबिम्बभाराक्रमणनिपीडितमङ्गनागणस्य ।
चरणयुगमसुस्रुवत्पदेषु स्वरसमसक्तमलक्तकच्छलेन ॥ ७-६

अत्रालक्तकच्छलेन स्वरसत्वारोपादारोपपूर्वकोऽपह्नुतिरलकार.।

३-भजते विदेशमधिकेन जितस्तदनुप्रवेशमथवा कुशल ।
मुखमिन्दुरुज्ज्वलकपोलमत प्रतिमाच्छलेन सुदृशामविशत् ॥ ९-४८

प्रतिमाच्छलेन सुतनोरविशतिति आरोपपूर्वकोऽपह्नवालकार. ।

४–तं वदन्तमिति विष्टरश्रवा श्रावयन्नथ समस्तभूभृतः ।
व्याजहार दशनांशुमण्डलव्याजहार शबलं दधद्वपु ॥ १४-१२

अत्र दशनांशुमण्डलव्याजेनारोपपूर्वकोऽपह्नवालंकार. ।

५–शरक्षते गजे भृङ्गैः सविषादिनिषादिनि ।
रुतव्याजेन रुदितं तत्रासीदतिसीदति १९-७०

अत्र रुतव्याजेन रुदितमिति अपह्नवपूर्वकोऽपह्नुतिरलंकार. ।

६–शरवर्षी महानाद स्फुरत्कार्मुककेतन ।
नीलच्छविरसौ रेजे केशवच्छलनीरद ॥ १९-९६

अत्र केशवापह्नवेन मेघत्वारोपणादारोपपूर्वकोऽपह्नवालंकारः ।

---

# उत्प्रेक्षा

१–विहङ्गराजाङ्करुहैरिवायतैर्हिरण्मयोर्वीरुहवल्लितन्तुभि. ।
कृतोपवीतं हिमशुभ्रमुच्चकैर्घनं घनान्ते तडितां गणैरिव ॥ १-७
घनान्ते घनमिवेति उपात्तविषयोत्प्रेक्षा सा च जातिभावस्वरूपा ।

२–निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा लसद्बिसच्छेदसिताङ्गसङ्गिना
चकासतं चारुचमूरुचर्मणा कुथेन नागेन्द्रमिवेन्द्रवाहनम् ॥१-८

इन्द्रवाहनमिव चकासतमिति वाच्यानुपात्तविषया द्रव्यस्वरूपोत्प्रेक्षा

३–अजस्रमास्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया ।
पुर प्रवालैरिव पूरितार्धया विभान्तमच्छस्फटिकाक्षमालया ॥ १-९

प्रवालै. प्रोतमिवेति वाच्योत्प्रेक्षा सा चोपात्तजातिस्वरूपा ।

४–न यावदेतावुदपश्यदुत्थितौ जनस्तुषाराञ्जनपर्वताविव ।
स्वहस्तदत्ते मुनिमासने मुनिश्चिरन्तनस्तावदभिन्यवीविशत् ॥ १-१५
उदपश्यद् इत्यत्र प्रतीयमानोत्प्रेक्षा सा च क्रियागतभावाभिमानी ।

५–रथाङ्गपाणेः पटलेन रोचिषामृषित्विषः संवलिता विरेजिरे ।
चलत्पलाशान्तरगोचरास्तरोस्तुषारमूर्तेरिव नक्तमंशवः ॥ १-२१

जातिगतवाच्योत्प्रेक्षा सा च गुणहेतुभावा ।

६–प्रफुल्लतापिच्छनिभैरभीषुभिः शुभैश्च सप्तच्छदपांसुपाण्डुभिः ।
परस्परेण च्छुरिताऽमलच्छवी तदेकवर्णाविव तौ बभूवतुः ॥ १-२२

स्वरूपभावा द्रव्योत्प्रेक्षा सा च वाच्योपादानविषया ।

७–प्रभुर्बुभूषुर्भुवनत्रयस्य यः शिरोऽतिरागाद्दशमं चिकर्तिषुः ।
अतर्कयद्विघ्नमिवेष्टसाहसः प्रसादमिच्छासदृशं पिनाकिनः ॥ १-४६

विघ्नमिवातर्कयदिति गुणाभावोपादानविषयोत्प्रेक्षा ।

८–परेतभर्तुर्महिषोऽमुना धनुर्विधातुमुत्खातविषाणमण्डलः ।
हृतेऽपि भारे महतस्त्रपाभरादुवाह दुःखेन भृशानतं शिरः ॥ १-५७

त्रपाभरादिति उपादाननिमित्ता प्रतीयमानोत्प्रेक्षा ।

९–विदग्धलीलोचितदन्तपत्रिकाविधित्सया नूनमनेन मानिना ।
न जातु वैनायकमेकमुद्धृतं विषाणमद्यापि पुनः प्ररोहति ॥ १-६०

नूनमिति वाच्योत्प्रेक्षा सा च गुणहेतूपादाननिमित्ता ।

१०–स बाल आसीद्वपुषा चतुर्भुजो मुखेन पूर्णेन्दुनिभस्त्रिलोचनः ।
युवा कराक्रान्तमहीभृदुच्चकैरसंशयं सम्प्रति तेजसा रविः ॥ १-७०

श्लेषानुप्राणितेयमुत्प्रेक्षा सा च प्रतीयमानोपादाननिमित्ता ।

११–ओमित्युक्तवतोऽथ शार्ङ्गिण इति व्याहृत्य वाचं नभ-
स्तस्मिन्नुत्पतिते पुरः सुरमुनाविन्दोः श्रियं बिभ्रति ।
शत्रूणामनिशं विनाशपिशुनः क्रुद्धस्य चैद्यं प्रति ।
व्योम्नीव भ्रुकुटिच्छलेन वदने केतुश्चकारास्पदम् ॥ १-७५

इन्दोः श्रियं बिभ्रति इति प्रतीयमानोत्प्रेक्षा सा च भावद्रव्यरूपा ।

१२–रत्नस्तम्भेषु संक्रान्तप्रतिमास्ते चकाशिरे ।
एकाकिनोऽपि परितः पौरुषेयवृता इव ॥ २-४

जातिवाच्योत्प्रेक्षा सा च क्रियानिमित्ता ।

१३–द्योतितान्तः सभैः कुन्दकुड्मलाग्रदतः स्मितैः ।
स्नपितेवाभवत्तस्य शुद्धवर्णा सरस्वती ॥ २-७

क्रियावाच्योत्प्रेक्षा फलगा च सा ।

१४–सम्पदा सुस्थिरंमन्यो भवति स्वल्पयापि यः ।
कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥ २-३२

वाच्या फलाभावा च सा ।

१५–इति संरम्भिणो वाणीर्बलस्यालेख्यदेवताः ।
सभाभित्तिप्रतिध्वानैर्भयादन्ववदन्निव ॥ २-६७

क्रियावाच्योत्प्रेक्षा उपात्तविषया च सा ।

१६–तस्योल्लसत्काञ्चनकुण्डलाग्रप्रत्युप्तगारुत्मतरत्नभासा ।
अबाधि बाल्योचितनीलकण्ठपिच्छावचूडाकलनामिवोरः ३-५

भावाभिमाने गुणवाच्योत्प्रेक्षा ।

१७–तमङ्गदे मन्दरकूटकोटिव्याघट्टनोत्तेजनया मणीनाम् ।
बंहीयसा दीप्तिवितानकेन चकासयामासतुरुल्लसन्तौ ॥ ३-६

जातिप्रतीयमानोत्प्रेक्षा सा च भावाभिमाने हेतुगा ।

१८–निसर्गरक्तैर्वलयावनद्धताम्राश्मरश्मिच्छुरितैर्नखाग्रैः ।
व्यद्योतताद्यापि सुरारिवक्षोविक्षोभजासृक्स्नपितैरिवासौ ॥ ३-७

वाच्याक्रियोत्प्रेक्षा हेतुगा च सा ।

१६–तेनाम्भसा सारमय: पयोधेर्दध्रे मणिर्दीधितिदीपिताश. ।
अन्तर्वसन्बिम्बगतस्तदङ्गे साक्षादिवालक्ष्यत यत्र लोक: ॥ ३-६

वाच्याजात्योत्प्रेक्षा क्रियागता च सा ।

२०–मुक्तामय सारमनावलम्बि भाति स्म दामाश्रादीनमस्य ।
अङ्गुष्ठनिष्ठ्यूतमिवोर्ध्वमुच्चैस्त्रिस्रोतस सन्ततधारमम्भ ॥ ३-१०

जातिवाच्योत्प्रेक्षा स्वरूपगा च सा ।

२१–आकर्षतेवोर्ध्वमतिकृशीयानत्युन्नतत्वात्कुचमण्डलेन ।
ननाम मध्योऽतिगुरुत्वभाजा नितान्तमाक्रान्त इवाङ्गनानां ३-१५

क्रियागतवाच्योत्प्रेक्षा सा च उपादाननिमित्ता ।

२२–विरोधिना विग्रहभेददक्षा मूर्तेव शक्ति क्वचिदस्खलन्ती ।
नित्यं हरे सन्निहिता निकामं कौमोदकी मोदयति स्म चेत. ॥ ३-१८

गुणगतवाच्योत्प्रेक्षा सा चोपादाननिमित्ता ।

२३–निरुध्यमाना यदुभि कथंचिन्मुहुर्यदुच्चिक्षिपुरग्रपादान् ।
ध्रुव गुरुन्मार्गरुध: करीन्द्रानुल्लङ्घ्य गन्तु तुरगास्तदीपु. ॥ ३-२६

वाच्योत्प्रेक्षा सा च जातिस्वरूपगा ।

२४–मध्येसमुद्रं ककुभ: पिशङ्गीर्या कुर्वती काञ्चनवप्रभासा ।
तुरङ्गकान्तामुखहव्यवाहज्वालेव भित्त्वा जलमुल्ललास ॥ ३-३३

उपात्तविषयोत्प्रेक्षा सा च जातिवाच्या ।

२५–कृतास्पदा भूमिभृता सहस्रं रुदन्वदम्भ परिवीतमूर्ति ।
अनिर्विदा या विदधे विधात्रा पृथ्वी पृथिव्या प्रतियातनेव ॥ ३-३४

वाच्योत्प्रेक्षा सा च जातिस्वरूपगा ।

२६–त्वष्टुः सदाभ्यासगृहीतशिल्पविज्ञानसम्पत्प्रसरस्य सीमा ।
अदृश्यतादर्शतलामलेषु च्छायेव या स्वर्जलधेर्जलेषु ॥ ३-३५

जातिगतवाच्योत्प्रेक्षा सा च हेतुगा ।

२७–अम्भश्च्युतः कोमलरत्नराशीनपांनिधिः फेनपिनद्धभासः ।
यत्रातपे दातुमिवाधितल्पं विस्तारयामास स्व गृहस्थे ॥ ३-३६

क्रियागतवाच्योत्प्रेक्षा सा च उपात्तविषया ।

२८–यच्छालमुत्तुङ्गतया विजेतुं दूरादुदस्थीयत सागरस्य ।
महोर्मिभिर्व्याहतवाञ्छितार्थैर्व्रीडादिवाभ्यासगतैर्विलिल्ये ॥ ३-४०

हेतूत्प्रेक्षा सा च गुणगतवाच्या ।

२९–कुतूहलेनेव जवादुपेत्य प्राकारभित्त्या सहसा निषिद्धः ।
रसन्नरोदीदुद्दामम्बुवर्षव्याजेन यस्या बहिरम्बुवाहः ॥ ३-४१

क्रियागतवाच्योत्प्रेक्षा हेतुगा च सा ।

३०–यदङ्गनारूपसरूपतायाः कंचिद्गुणं भेदयितुमक्षमाभिः ।
आराधितोऽद्धा मनुरप्सरोभिश्चक्रे प्रजाः स्वाः सनिमेषचिह्नाः ॥ ३-४२

भावाभिमाने जातिगतप्रतीयमानोत्प्रेक्षा ।

३१–स्फुरत्तुषारांशुमरीचिजालैर्विनिह्नुताः स्फाटिकसौधपङ्क्तीः ।
आरुह्य नार्यः क्षणदासु यत्र नभोगता देव्य इव व्यराजन् ॥ ३-४३

वाच्योत्प्रेक्षा सा च भावाभिमाने जातिगा ।

३२–यस्यामतिश्लक्ष्णतया गृहेषु विधातुमालेख्यमशक्नुवन्तः ।
चक्रुर्युवानः प्रतिबिम्बिताङ्गाः सजीवचित्रा इव रत्नभित्तीः ॥ ३-४६

उपात्तविषयोत्प्रेक्षा सा च जातिगतफलगा ।

३३–गोपानसीषु क्षणमास्थितानामानन्द्रिभिश्चन्द्रकिरणा कलापैः ।
हरिन्मणिश्यामतृणाभिरामैर्गृहाणि नीध्रैरिव यत्र रेजुः ॥ ३-४६

जातिस्वरूपोत्प्रेक्षा सा च भावाभिमाने वाच्या ।

३४–रतान्तरे यत्र गृहान्तरेषु वितर्दिनिर्यूहविटङ्कनीडः ।
रुतानि शृण्वन्वयसा गणोऽन्तेवासित्वमाप स्फुटमङ्गनानाम् ॥ ३-५५

जातिगतप्रतीयमानोत्प्रेक्षा सा चोपात्तविषया ।

३५–चलोर्मिभिस्तत्क्षणहीयमानरथ्याभुजाया वलयैरिवास्याः ।
प्रायेण निष्क्रामति चक्रपाणौ नेष्टं पुरो द्वारवतीत्वमासीत् ॥ ३-६६

उपात्तविषयोत्प्रेक्षा सा च जातिगतवाच्या ।

३६–पारेजलं नीरनिधेरपश्यन्मुरारिरानीलपलाशराशीः ।
वनावलीरुत्कलिकासहस्रप्रतिक्षणोत्कूलितशैवलाभाः ॥ ३-७०

प्रतीयमानोत्प्रेक्षा सा च उपमामूलाद् वैचित्र्यमधिका ।

३७–लक्ष्मीभृतोऽम्भोधितटाधिवासान् द्रुमानसौ नीरदनीलभासः ।
लतावधूसम्प्रयुजोऽधिवेलं बहूकृतान् स्वानिव पश्यति स्म ॥ ३-७१

श्लेषसंकीर्णा वाच्योत्प्रेक्षा ।

३८–आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरङ्गम् ।
फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥ ३-७२

वाच्योत्प्रेक्षा सा च भावाभिमाने द्रव्यगा ।

३९–पीत्वा जलानां निधिनातिगार्ध्याद्वृद्धिं गतेऽप्यात्मनि नैव मान्तीः ।
क्षिप्ता इवेन्दोः स रुचोऽधिवेलं मुक्तावलीराकलयाचकार ॥ ३-७३

जातिगा वाच्योत्प्रेक्षा ।

४०-उरसिस्त्रवोऽन्तर्नदभर्तु रुच्चैर्गरीयसा निःश्वसितानिलेन ।
पयांसि भक्त्या गरुडध्वजस्य ध्वजानिवोच्चिक्षिपिरे फणीन्द्राः ।३-७

उपात्तविषयोत्प्रेक्षा सा च जातिस्वरूपगा ।

४१-तमागतं वीक्ष्य युगान्तबन्धुमुत्सङ्गशय्याशयमम्बुराशिः ।
प्रत्युज्जगामेव गुरुप्रमोदप्रसारितोत्तुङ्गतरङ्गबाहुः ॥ ३-७८

क्रियागतस्वरूपोत्प्रेक्षा वाच्या च सा ।

४२-निःश्वासधूमं सह रत्नभाभिर्भित्त्वोत्थितं भूमिमिवोरगाणाम् ।
नीलोपलस्यूतविचित्रधातुमसौ गिरिं रैवतकं ददर्श ॥ ४-१

गुणनिमित्तजातिस्वरूपोत्प्रेक्षा ।

४३-गुर्वीरजस्रं दृषदः समन्तादुपर्युपर्यम्बुमुचां वितानैः ।
विन्ध्यायमानं दिवसस्य भर्तुर्मार्गं पुना रोद्धुमिवोन्नमद्भिः ॥ ४-२

क्रियास्वरूपोत्प्रेक्षा सा चोपात्तविषयवाच्या ।

४४-सहस्रसंख्यैर्गगनं शिरोभिः पादैर्भुवं व्याप्य वितिष्ठमानम् ।
विलोचनस्थानगतोष्णरश्मिनिशाकरं साधु हिरण्यगर्भम् ॥ ४-४

गुणगतप्रतीयमानोत्प्रेक्षा ।

४५-स्कन्धाधिरूढोज्ज्वलनीलकण्ठानुर्वीरुहः श्लिष्टतनूनहीन्द्रैः ।
प्रनर्तितानेकलतामुजाग्रान् रुद्राननेकानिव धारयन्तम् ॥ ४-५

वाच्योत्प्रेक्षा सा च भावाभिमाने जातिस्वरूपगा ।

४६-उत्क्षिप्तमुच्छ्रितसितांशुकरावलम्बै-
रुत्तम्भितोडुभिरतीवतरां शिरोभिः ।

श्रद्धेयनिर्भरजनव्यपदेशमस्य
विष्वक्तटेषु पतति स्फुटमन्तरीक्षम् ॥ ४-२५

भावाभिमाने क्रियागतप्रतीयमानोत्प्रेक्षा ।

४७—रुचिरचित्रतनूरुहशालिभिर्विचलितैः परितः प्रियकव्रजैः ।
विविधरत्नमयैरभिभात्यसाववयवैरिव जङ्गमतां गतैः ॥ ४-३२

वाच्योत्प्रेक्षा सा च जातिस्वरूपगा ।

४८—वनस्पतिस्कन्धनिषण्णबालप्रवालहस्ताः प्रमदा इवात्र ।
पुष्पेक्षणैर्लम्भितलोचकैर्वा मधुव्रतव्रातवृतैर्व्रतत्यः ॥ ४-३५

जातिगतवाच्योत्प्रेक्षा सा च उपात्तविषया ।

४९—वर्जयन्त्या जनैः सङ्गमेकान्तत-
स्तर्कयन्त्या सुखं सङ्गमे कान्ततः ।
योषयैष स्मरासन्नतापाङ्गया
सेव्यतेऽनेकया संनतापाङ्गया ॥ ४-४२

उपात्तविषयोत्प्रेक्षा सा च प्रभावाभिमाने जातिस्वरूपगा ।

५०—संकीर्णकीचकवनस्खलितैकबाल-
विच्छेदकातरधियश्चलितुं चमर्यः ।
अस्मिन् मृदुश्वसनगर्भतदीयरन्ध्र-
निर्यत्स्वनश्रुतिसुखादिव नोत्सहन्ते ॥ ४-४३

हेतूत्प्रेक्षा सा च जातिगतवाच्या ।

५१—भिन्नेषु रत्नकिरणैः किरणेष्विहेन्दो-
रुच्चावचैरुपगतेषु सहस्रमस्याम् ।

दोषापि नूनमहिमांशुरसौ किलेति
व्याकोशकोकनदता दधते नलिन्यः ॥ ४-४६

क्रियागतवाच्योत्प्रेक्षा सा च अतिशयोक्तिमूला ।

५२–अपशङ्कमङ्कपरिवर्तनोचिताश्चलिताः पुरः पतिमुपैतुमात्मजाः ।
अनुरोदितीव करुणेन पत्त्रिणां विरुतेन वत्सलतयैष निम्नगाः ॥४-४७

क्रियागतवाच्योत्प्रेक्षा सा चाभावात् फलगा ।

५३–स्खलति न क्वचिदपि सान्द्रवल्लप-
द्रुमकुसुमैरभिगुम्फितानिवैता ।
क्षणमलघुविलम्बिपिच्छदाम्न
शिखरशिखाः शिखिशेखरानमुष्य ॥ ४-५०

जातिगतवाच्योत्प्रेक्षा सा च रूपकमूला ।

५४–सायंशशाङ्ककिरणाहतचन्द्रकान्त-
निस्यन्दिनीरनिकरेण कृताभिषेकाः ।
अर्कोपलोल्लसितवह्निभिरह्नितप्ता-
स्तीव्रं महाव्रतमिवात्र चरन्ति वप्राः ॥ ४-५८

अभावाभिमाने गुणगतवाच्योत्प्रेक्षा ।

५५–अनुकृतशिखरौघश्रीभिरभ्यागतेऽसौ
त्वयि सरभसमभ्युत्तिष्ठतीवाद्रिरुच्चैः ।
द्रुतमरुदुपनुन्नैरुन्नमद्भिः सहेलं
हलधरपरिधानश्यामलैरम्बुवाहैः ॥ ४-६८

क्रियागतवाच्योत्प्रेक्षा सा च भ्रान्तिमान्मूला ।

५६–तं स द्विपेन्द्रतुलितातुलतुङ्गशृङ्ग-
मभ्युल्लसत्कदलिकावनराजिमुच्चैः ।
विस्ताररुद्धवसुधोऽन्वचलं चचाल
लक्ष्मीं दधत्प्रतिगिरेरलघुर्बलौघः ॥ ५-२

श्लेषानुप्राणितप्रतीयमानोत्प्रेक्षा सा च भावाभिमाने जातिगा ।

५७–भास्वत्करव्यतिकरोल्लसिताम्बरान्ताः
सापत्रपा इव महाजनदर्शनेन ।
संविव्युरम्बरविकाशि चमूसमुत्थं
पृथ्वीरजः करभकण्ठकडारमाशाः ॥ ५-३

गुणगतवाच्योत्प्रेक्षा सा च उपात्तविषया ।

५८–उद्यत्कृशानुशकलेषु खुराभिघाता-
द्भूमीमयतशिलाफलकाचितेषु ।
पर्यन्तवर्त्मसु विचक्रमिरे महाश्वाः
शैलस्य दर्दुरपुटानिव वादयन्तः ॥ ५-९

जातिगतवाच्योत्प्रेक्षा सा च भावाभिमाने स्वरूपगा ।

५९–नीहारजालमलिनः पुनरुक्तसान्द्राः
कुर्वन्वधूजनविलोचनपक्ष्ममालाः ।
क्षुण्णः क्षणं यदुबलैर्दिवमाविवासुः
प्रागुद्दिशां मुखमनुत्ययदुत्थितोऽद्रेः ॥ ५-११

प्रतीयमानोत्प्रेक्षा सा चाभावेजातिगा ।

६०–सिक्ता इवामृतरसेन मुहुर्जनानां
क्लान्तिच्छिदो वनवनस्पतयस्तदानीम् ।
शाखावसक्तवसनाभरणाभिरामाः
कल्पद्रुमैः सह विचित्रफलैर्विरेजुः ॥ ५-१६

क्रियागतवाच्योत्प्रेक्षा सा चोपमामूला ।

६१–दृष्ट्वेव निर्जितकलापभरामधस्ताद्-
व्याकीर्णमाल्यकबरां कबरीं तरुण्याः ।
प्रादुद्रुवत् सपदि चन्द्रकवान् द्रुमाग्रात्
सर्षाविणा सह गुणाभ्यधिकैर्दुरासम् ॥ ५-१९

क्रियागतवाच्योत्प्रेक्षा सा च अर्थान्तरन्यासमूला ।

६२–रोचिष्णुकाञ्चनचयांशुपिशङ्गिताशा
वंशध्वजैर्जलदसंहतिमुल्लिखन्त्य ।
भूमर्तुरायतनिरन्तरसंनिविष्टाः
पादा इवाभिबभुरावलयो रथानाम् ॥ ५-२०

जातिस्वरूपोत्प्रेक्षा वाच्या च सा ।

६३–आस्तीर्णतल्परचितावसथः क्षणेन
वेन्याजनः कृतनवप्रतिकर्मकाम्यः ।
खिन्नानखिन्नमतिरापततो मनुष्यान्
प्रत्यग्रहीच्चिरनिविष्ट इवोपचारैः ॥ ५-२७

क्रियागतवाच्योत्प्रेक्षा सा चानुपात्तविषया।

६४–आलोलपुष्करमुखोल्लसितैरभीक्ष्ण-
मुक्षांबभूवुरभितो वपुरम्बुवर्षैः ।
खेदायतश्वसितवेगनिरस्तमुग्ध-
मूर्धन्यरत्ननिकरैरिव हास्तिकानि ॥ ५-३०

जातिगतवाच्योत्प्रेक्षा ।

६५–ये पक्षिणः प्रथममम्बुनिधिं गतास्ते
येऽपीन्द्रपाणितुलितायुधलूनपक्षाः ।
ते जग्मुरद्रिपतयः सरसीर्विगाढु-
माक्षिप्तकेतुकुथसैन्यगजच्छलेन ॥ ५-३१

जातिगतगम्योत्प्रेक्षा स्वरूपगा च सा ।

६६–आत्मानमेव जलधे प्रतिबिम्बिताङ्ग-
मूर्मौ महत्यभिमुखापतितं निरीक्ष्य ।
क्रोधादधावदपभीरभिहन्तुमन्य-
नागाभियुक्त इव युक्तमहो महेभः ॥ ५-३२

क्रियागतवाच्योत्प्रेक्षा सा च भावभिमाने हेतुगा ।

६७–अन्तर्जलौघमवगाढवतः कपोलौ
हित्वा क्षणं विततपक्षतिरन्तरीक्षे ।
द्रव्याश्रयेष्वपि गुणेषु रराज नीलो
वर्णः पृथग्गत इवालिगणो गजस्य ॥ ५-३८

क्रियागत वाच्योत्प्रेक्षा ।

६८–शुक्लांशुकोपरचितानि निरन्तराभि-
र्वेश्मानि रश्मिविततानि नराधिपानाम् ।
चन्द्राकृतीनि गजमण्डलिकाभिरुच्चै-
र्नीलाभ्रपंक्तिररिवेपमिवाधिजग्मुः ५-५२

जातिगतवाच्योत्प्रेक्षा गुणनिमित्ता च सा ।

६९–परस्योद्धर्तासि त्वमिति ननु सर्वत्र जगति
प्रतीतस्तत्किं मामतिभरमध प्रापिपयिषुः ।
उपालब्धेवोच्चैर्गिरिपतिरिति श्रीपतिमसौ
बलाक्रान्तः क्रीडद्द्विरदमथितोर्वीरुहरवैः ॥ ५-६६

क्रियागतवाच्योत्प्रेक्षा ।

७०–स्फुटमिवोज्ज्वलकाञ्चनकान्तिभिर्युतमशोकमशोभत चम्पकैः ।
विरहिणां हृदयस्य भिदाभृतः कपिशितं पिशितं मदनाग्निना ॥ ६-५

क्रियागतवाच्योत्प्रेक्षा सा च उपात्तविषया ।

७१–स्मरहुताशनमुर्मुरचूर्णतां दधुरिवाम्रवणस्य रजःकणाः ।
निपतिताः परितः पथिकव्रजानुपरि ते परितेपुरतो भृशम् ॥ ६-६

क्रियागतवाच्योत्प्रेक्षा क्रियानिमित्ता च सा ।

७२–रतिपतिप्रहितेव कृतक्रुधः प्रियतमेषु वधूरनुनायिका ।
बकुलपुष्परसासवपेशलध्वनिरगान्निरगान्मधुपावलिः ॥ ६-७

वाच्योत्प्रेक्षा सा च क्रियागतहेतुगा ।

७३–प्रियसखीसदृशं प्रतिबोधिताः किमपि काम्यगिरा परपुष्टया ।
प्रियतमाय वपुर्गुरुमत्सरच्छिदुरयाऽङ्कुरनाचितमङ्गना ॥ ६-८

गम्योत्प्रेक्षा सा च गुणगतफलगा ।

७४–इति गदन्तमनन्तरमङ्गना भुजयुगोन्नमनोच्चतरस्तनी ।
प्रणयिनं रभसादुदरश्रिया वलिभयालिभयादिव सस्वजे ॥ ६-१३

हैतूत्प्रेक्षा सा च गुणगतवाच्या ।

७५–न खलु दूरगतोऽप्यतिवर्तते महमसाविति बन्धुतयोदितैः ।
प्रणयिनो निशमय्य वधूर्वहिः स्वरमृतैरमृतैरिव निर्ववौ ॥ ६-१६

वाच्योत्प्रेक्षा सा च द्रव्यस्वरूपगा ।

७६–द्विरददन्तवलक्षमलक्ष्यत स्फुरितभृङ्गमृगच्छवि केतकम् ।
घनघनौघविघट्टनया दिवः कृशशिखं शशिखण्डमिवच्युतम् ॥ ६-३४

जातिगतवाच्योत्प्रेक्षा सा चोपमामूला ।

७७–नवपयःकणकोमलमालतीकुसुमसंततिसंततसङ्गिभिः ।
प्रचलितोडुनिभं परिपाण्डिमा शुभरजोभरजोऽलिभिरादधे ॥ ६-३६

क्रियागतवाच्योत्प्रेक्षा सा चोपमामूला ।

७८–विगतरागगुणोऽपि जनो न कश्चलति वाति पयोदनभस्वति ।
अभिहितेऽलिभिरेवमिवोच्चकैरननृते ननृते नवपल्लवैः ॥ ६-३६

वाच्योत्प्रेक्षा सा च भावाभिमाने फलगा ।

७९–स विकचोत्पलचक्षुपमैक्षत क्षितिभृतोऽङ्कगता दयितामिव ।
शरदमच्छगलद्वसनोपमाक्षमघनामघनाशनकीर्तन ॥ ६-४२

जातिगतवाच्योत्प्रेक्षा सा च भावाभिमानीस्वरूपगा ।

८०–समय एव करोति बलाबलं प्रणिगदन्त इतीव शरीरिणाम् ।
शरदि हंसरवाः परुषीकृतस्वरमयूरमयूं रमणीयताम् ॥ ६-४४

अभावाभिमानी क्रियागतवाच्योत्प्रेक्षा ।

८१–तनुरुहाणि पुरो विजितध्वनेर्धवलपक्षविहंगमकूजितैः ।
जगलुरक्षमयेव शिखण्डिनः परिभवोऽरिभवो हि सुदुःसहः ॥ ६-४५

गुणगतवाच्योत्प्रेक्षा सा चाभावाभिमाने हेतुगा ।

८२–कुतमदं निगदन्त इवाकुलीकृतजगत्त्रयमूर्जमतङ्गजम् ।
ववुरयुक्छदगुच्छसुगन्धयः सततगास्ततगानगिरोऽलिभिः ॥ ६-५०

जातिगतवाच्योत्प्रेक्षा स्वरूपगा च सा ।

८३–विगतवारिधरावरणाः क्वचिद्ददृशुरुल्लसितासितासिताः ।
क्वचिदिवेन्द्रगजाजिनकञ्चुका शरदि नीरदिनीर्यदवो दिशः ॥६-५१

वाच्योत्प्रेक्षा सा च रूपकमूला ।

८४–विलुलितामनिलैः शरदङ्गना नवसरोरुहकेसरसंभवाम् ।
विकरितुं परिहासविधित्सया हरिवधूरिव धूलिमुदक्षिपत् ॥ ६-५२

वाच्योत्प्रेक्षा सा च रूपकमूला ।

८५–हरितपत्रमयीव मरुद्गणैः स्रगवनद्धमनोरमपल्लवा ।
मधुरिपोरभिताम्रमुखी मुद दिवि तता विततान शुकावलिः ॥ ६-५३

गुणगतवाच्योत्प्रेक्षा स्वरूपगा च सा ।

८६–स्मितसरोरुहनेत्रसरोजलामतिसिताङ्गविहङ्गहसद्द्विवम् ।
प्रकलयन्मुदितामिव सर्वत स शरद शरदन्तुरदिङ्मुखाम् ॥६-५४

द्रव्यगतवाच्योत्प्रेक्षा सा च रूपकमूला ।

८७–गृशमदूयत याऽधरपल्लवक्षतिरनावरणा हिममारुतैः ।
दशनरश्मिपटेन च सीत्कृतैर्निवसितेव सितेन सुनिर्वृतौ ॥ ६-५८

क्रियागतवाच्योत्प्रेक्षा ।

८८–व्रणभृता सुतनो कलसीत्कृतस्फुरितदन्तमरीचिमय दधे ।
स्फुटमिवावरण हिममारुतैर्मृदुतया दुतयाधरलेखया ॥ ६-५९

क्रियागतवाच्योत्प्रेक्षा ।

८९–कुसुमयन्फलिनीरलिनीरवैर्मदविकासिभिराहितहूतिः ।
उपवन निरभत्संयत प्रियान्वियुवतीर्युवती शिशिरानिल ॥ ६-६२

क्रियागतगम्योत्प्रेक्षा सा च हेतुगा ।

९०–अभिषिषेणयिषु भुवनानि य स्मरमिवाम्यत लोध्ररजश्चय ।
क्षुभितसैन्यपरागविपाण्डुरद्युतिरय निरयन्नुदभूद्दिश. ॥ ६-६४

जातिगतवच्योत्प्रेक्षा स्वरूपगा च सा ।

९१–शिशिरमासमपास्य गुणोऽस्य न क इव शीतहरस्य कुचोष्मणः ।
इति धियास्तरुप परिरेभिरे घनमतो नमतोऽनुमतान् प्रियाः ॥६-६५

गुणगतगम्योत्प्रेक्षा उपात्तविषया च सा ।

९२–प्रविनवङ्कममी रजसाधिकं मलिनिताः सुमनोदलतालिनः ।
स्फुटमिति प्रसवेन पुरोऽहसत्सपदि कुन्दलता दलतालिनः ॥ ६-६६

क्रियागतवाच्योत्प्रेक्षा फलगा च सा ।

९३–प्रतिसुरभिरभाजि पुष्पश्रियामतनुतरतयेव सनानकः ।
तरुणपरभृतः स्वनं रागिणामतनुत रतये वसन्तानकः ॥ ६-६७

गुणगतवाच्योत्प्रेक्षा सा च उपमामूला ।

९४–जगद्वशीकर्तुमिमाः स्मरस्य प्रभावनीके तनवै जयन्तीः ।
इत्यस्य तेने कदलीमधुश्री प्रभावनी केतनवैजयन्तीः ॥ ६-६९

द्रव्यगतवाच्योत्प्रेक्षा हेतुगा च सा ।

९५–स्मररागमयी वपुस्तमिस्रा परितस्तार रवेरसत्यवद्यम् ।
प्रियमाप दिवापि कोकिले स्त्री परितस्तार रवे रसत्यवद्यम् ॥ ६-७०

क्रियास्वरूपगम्योत्प्रेक्षेयम् ।

९६–गतवनामिव विस्मयमुच्चकैरसकलामलपल्लवलीलया ।
मधुकृतामसकृद्गिरमावली रसकलामलपल्लवलीनया ॥ ६-७८

गुणहेतूत्प्रेक्षा सा च शाब्दी ।

९७–कुर्वन्तमित्यतिभरेण नगानवाचः
पुष्पैर्विराममलिनां च न मानवाचः ।
श्रीमान्समस्तमनुसानु गिरौ विहर्तुं
बिभ्रत्यचोदि स मयूरगिरा विहर्तुम् ॥ ६-७२

गम्योत्प्रेक्षा सा च जातिस्वरूपगा ।

९८–इति वदति सखीजनेऽनुरागाद्‌दयितमामपरिचितं प्रतीक्ष्य ।
तदनुगमवशादनायतानि न्यधित विमान इवावनि पदानि ॥ ७ १३

क्रियागतवाच्योत्प्रेक्षा हेतुगा च सा ।

९९–मधुमथनवधूरिवाह्वयन्ति भ्रमरकुलानि जगुर्यदुत्सुकानि ।
तदभिनयमिवावलिर्वनानामतनुत नूतनपल्लवाङ्गुलीभिः ॥ ७-२५

क्रियास्वरूपोत्प्रेक्षा सा च प्रतीयमाना रूपकानुप्राणिता ।

१००–प्रसकलकलिकाकुलीकृतालिस्खलनविकीर्णविकासिकेशराणाम् ।
मरुदवनिरुहां रजो वधूभ्यः समुपहरन् विचकार कोरकाणि ॥ ७-२६

जातिगतगम्योत्प्रेक्षा सा च फलगा ।

१०१–रथचरणधराङ्गनाकराब्जव्यतिकरसम्पदुपात्तसौमनस्याः ।
जगति सुमनसस्तदादि नूनं दधति परिस्फुटमर्थतोऽभिधानम् ॥ ७-२८

गुणगतवाच्योत्प्रेक्षा सा हेतुगा रूपकानुप्राणिता च ।

१०२–मुदितमधुभुजो भुजेन शाखाश्चलितविशृङ्खलशङ्खक क्षुवस्याः ।
तरुरतिशयितापराङ्गनायाः शिरसि मुदेव मुमोच पुष्पवर्षम् ॥ ७-३०

गुणगतवाच्योत्प्रेक्षा सा हेतुगा रूपकानुप्राणिता च ।

१०३–सरजसमकरन्दनिर्भरासु प्रसवविभूतिषु भूरुहां विरक्तः ।
ध्रुवममृतपनामवाञ्छयासावधरमसुं मधुपस्तवाजिहीते ॥ ७ ४०

जातिगतवाच्योत्प्रेक्षा सा च श्लेषानुप्राणिता ।

१०४–मुहुरुपहसितामिवालिनादैर्वितरसि नः कलिकां किमर्थमेनाम् ।
वसतिमुपगतेन धाम्नि तस्या शठ कलिरेष महांस्त्वयाद्य दत्तः ॥ ७-४५

क्रियागतवाच्योत्प्रेक्षा सा च स्वरूपगा ।

१०५–स्फुटमिदमभिचारमन्त्र एव प्रतियुवतेरभिधानमङ्गनानाम् ।
वरतनुरमुनोऽपहृत्य यस्या मृदुकुसुमेन यदाहनाप्यमूर्छत् ॥ ७-४८

गुणगतगम्योत्प्रेक्षा सा च क्रियानिमित्ता ।

१०६-प्रवजितमधुना तवाहमक्ष्णो रुचिरतयेत्यवनम्य लज्जयेव ।
श्रवणकुवलयं विलासवत्या भ्रमररुतैरुपकर्णमाचचक्षे ॥ ७-६०

क्रियागतवाच्योत्प्रेक्षा सा च स्वरूपगा ।

१०७-श्लथशिरसिजपाशपातभारादिव नितरां ननिमद्भिरंसभागैः ।
मुकुलितनयनैर्मुखारविन्दैर्घनमहतामिव पक्ष्मणां भरेण ॥ ७-६२

जातिगतवाच्योत्प्रेक्षा सा च उपात्तविषया ।

१०८-प्रवसिललनितक्रियेण बाह्वोर्ललिततरेण तनीयसा युगेन ।
सरसकिसलयानुरञ्जितं वा करकमलं पुनरुक्तरक्तमाभि. ॥ ७-६४

इवार्थे वाशब्द प्रयुक्त । जातिगतवाच्योत्प्रेक्षात्र ।

१०९-स्मरसरसमुरः स्थलेन पत्युर्विनिमयमक्रमिताङ्गरागरागं ।
भृनमतिनयसेदसादिव स्तनयुगलैरितरेतरं निषण्णैः ॥ ७-६५

हेतूत्प्रेक्षा सा च गुणगतवाच्या ।

११०-नीरन्ध्रद्रुमशिशिरां भुवं व्रजन्तो
साशङ्कं मुहुरिव कौतुकात्स्पृशन्ता ।
पस्पर्शं क्षणमनिलाकुलीकृतानां
शाखानामनुहिनरश्मिरन्तराले ॥ ८-

गुणहेतूत्प्रेक्षा सा वाच्या फलगा च

१११-एकस्यास्तपनकरैः करालिताया
विभ्राणः सपदि सिनोष्णवारणत्वम् ।
सेवायै वदनसरोजनिर्जितश्री-
रागत्य प्रियमिव चन्द्रमाश्चकार ॥ ८-४

क्रियागतवाच्योत्प्रेक्षा सा च स्वरूपगा ।

११२-श्रीमद्भिर्जितपुलिनानि माधवीना-
मारोहैर्निविडवृहन्नितम्बबिम्बैः ।
पाषाणस्खलनविलोलमाशु नूनं
वैलक्ष्याद्ययुरवरोधनानि सिन्धो ॥ ८-८

वाच्यगुणहेतूत्प्रेक्षा क्रियानिमित्ता च सा ।

११३-उत्क्षिप्तस्फुटितसरोरुहार्घ्यमुच्चै
सस्नेहं विहगरुतैरिवालपन्ती ।
नारीणामथ सरसी सफेनहासा
प्रीत्येव व्यतनुत पाद्यमूर्मिहस्तैः ॥ ८-१४

क्रियागतवाच्योत्प्रेक्षा सा च रूपकानुप्राणिता ।

११४-नित्याया निजवसतेर्निरासिरे य-
द्रागेण श्रियमरविन्दतः कराग्रैः ।
व्यक्तत्वं नियतमनेन निन्युरस्याः
सापत्न्यं क्षितिसुतविद्विषो महिष्यः ॥ ८-१५

जातिगतवाच्योत्प्रेक्षा सा चातिशयोक्त्यनुप्राणिता ।

११५-आस्कन्दन् कथमपि योषितो न याव-
द्भीमत्यः प्रियकरधार्यमाणहस्ताः ।
औत्सुक्यात्त्वरिततमूरुतदम्बु ताव-
त्संक्रान्तप्रतिमतया दधाविवान्तः ॥ ८-१६

क्रियास्वरूपोत्प्रेक्षा सा च वाच्या ।

११६-प्रादातुं दयितमिवावगाढमारा-
दूर्मीणां ततिनिरभिप्रसार्यमाणा ।

कस्याश्चिद्विततचलच्छिदसाङ्गुलीको
लक्ष्मीवान् नरसि रराज केशहस्त ॥ ८-२७

क्रियागतवाच्योत्प्रेक्षा सा चानुपात्तविषया ।

११७–यौवस्य त्रिनयनलोचनानलार्चि-
र्निर्दग्धस्मरपृतनाधिराज्यलक्ष्म्या ।
कान्ताया करकलशोद्यतं पयोभि-
र्वक्त्रेन्दोरकृत महाभिषेककर्म ॥ ८-३२

गुणगतगम्योत्प्रेक्षा सा च उपात्तविषया ।

११८–सिञ्चन्त्या कथमपि बाहुमुन्नमय्य
प्रेयांसं मनसिजदुर्बलदुर्बलायाः ।
सौवर्णं वलयमवागलत्कराग्रा-
ल्लावण्यश्रिय इव शेषमङ्गनायाः ॥ ८-३४

गुणनिमित्तजातिस्वरूपोत्प्रेक्षा ।

११९–स्निह्यन्ती दृशमरसा निधाय पूर्णं
मूर्त्तेन प्रणयरसेन वारिणेव ।
कन्दर्पप्रवणमनाः सखीसिसिक्षा-
लक्ष्येण प्रतियुवमञ्जलिं चकार ॥ ८-३५

गुणगतवाच्योत्प्रेक्षा सा चाभावाभिमानी ।

१२०–प्रेम्णोरः प्रणयिनि सिञ्चति प्रियायाः
सन्तापं नवजलविप्रुषो गृहीत्वा ।
उद्भूता कठिनकुचस्थलाभिघाता-
दासन्ना भृशमपराङ्गनामघासुः ॥ ८-४०

गुणगतगम्योत्प्रेक्षा सा च हेतुगा ।

१२१–हृताशा प्रतिसखि कामिनान्यनाम्ना
ह्रीमत्या सरसि गलन्मुखेन्दुकान्ते. ।
यत्नाचि द्रुतमिव वर्तुमथ्यवर्णं
भूंमान गमयितुमीपिरे पयांसि ।। ८-४२

वाच्योत्प्रेक्षा सा च क्रियागतहेतुगा ।

१२२–सौगन्ध्यं दधदपि काममङ्गनाना
दुरत्वादगतमहमाननोपमानम् ।
नेदीयो जितमिति लज्जयेव नाम्ना-
मालोके पयसि महोत्पलं ममज्ज ।। ८-४८

गुणगतगम्योत्प्रेक्षा ।

१२३–प्रभ्रष्टैं सरभसमम्भसोऽवगाह-
क्रीडाभिर्विदलितयूथिकापिनद्धैः ।
धापल्यैं सरसि हिरण्मयैवंध्ना-
मौर्वाग्निद्युतिशकलैरिव व्यराजि ।। ८-४९

द्रव्यगतवाच्योत्प्रेक्षा सा च फलगा ।

१२४–आस्माकी युवतिदृशामसौ तनोति
च्छायैव श्रियमनपायिनी किमेभिः ।
मत्वैवं स्वगुणपिधानमाभ्यसूयं.
पानीयैरिति विदधाविरेऽञ्जनानि ।। ८-५०

प्रतीयमानोत्प्रेक्षा सा च क्रियागतोपात्तविषया ।

१२५–निर्धौते सति हरिचन्दने जलौघै-
रापाण्डोर्गतपरभागया ङ्गनाया. ।

अह्नाय स्तनकलशद्वयादुपेये
विच्छेद सहृदयेव हारयष्ट्या ॥ ८-५१

जातिगतवाच्योत्प्रेक्षा सा च गुणनिमित्ता ।

१२६–स्नान्तीनां बृहदमलोदबिन्दुचित्रौ
रेजाते रुचिरदृशामुरोजकुम्भौ ।
हाराणां मणिभिरुपाश्रितौ समन्ता-
दुत्सूत्रैर्गुणवदुपघ्नकाम्ययेव ॥ ८-५३

जातिगतवाच्योत्प्रेक्षा श्लेषानुप्राणिता च सा ।

१२७–भ्रश्यद्भिर्जलमभि भूषणैर्वधूना-
मङ्गेभ्यो गुणिभिरभज्जि लज्जयेव ।
निर्माल्यैरथ ननतेऽवधीरितानाम-
प्युच्चैर्भवति लघीयसां हि धार्ष्ट्यम् ॥ ८-६०

गुणगतवाच्योत्प्रेक्षा अर्थान्तरन्याससमूला च सा ।

१२८–शीतार्ति बलवदुपेयुषेव नीरै-
रासेकाच्छिशिरसमीरकम्पितेन ।
रामाणामभिनवयौवनोष्मभाजो-
राश्लेषि स्तनतटयोर्नवांशुकेन ॥ ८-६२

गुणगतवाच्योत्प्रेक्षा सा भावाभिमाने हेतुना ।

१२९–श्च्योतद्भिः समधिकमात्तमङ्गसङ्गा-
ल्लावण्यं तनुमदिवाम्बु वाससोऽन्तैः ।
उत्तेरे तरलतरङ्गरङ्गलीला-
निष्णातैरथ सरसः प्रियासमूहैः ॥ ८-६३

जातिगतवाच्योत्प्रेक्षा स्वरूपगा च सा ।

१३०–वासांसि न्यवसत यानि योषितस्ताः
शुभ्राभ्रद्युतिभिरहासि तैर्मुदेव ।
अत्याक्षुः स्नपनगलज्जलानि यानि
स्थूलाश्रुस्रुतिभिररोदि तैः शुचेव ॥ ८-६९

गुणगतवाच्योत्प्रेक्षा उपात्तविषया च सा ।

१३१–इति धौतपुरन्ध्रिमत्सरान्सरसि मज्जनेन
श्रियमाप्तवतोऽतिशायिनीमपमलाङ्गभासः ।
अवलोक्य तदैव यादवानपरवारिराशेः
शिशिरेतररोचिषाप्यपां ततिषु मङ्क्तुमीषे ॥ ८-७१

द्रव्यगतगम्योत्प्रेक्षा अभावाभिमानेऽनुपात्तविषया च सा ।

१३२–गतवत्यराजत जपाकुसुमस्तबकद्युतौ दिनकरेऽवनतिम् ।
बहलानुरागकुरुविन्ददलप्रतिबद्धमध्यमिव दिग्वलयम् ॥ ९-८

गुणगतवाच्योत्प्रेक्षा क्रियानिमित्ता च सा ।

१३३–अथ सान्द्रसान्ध्यकिरणारुणितं हरिहेतिहूति मिथुनं पततोः ।
पृथगुत्पपात विरहार्तिदलद्धृदयस्रुतासृगनुलिप्तमिव ॥ ९-१५

क्रियागतवाच्योत्प्रेक्षा स्वरूपगा च सा ।

१३४–दिवसोऽनुमित्रमगमद्विलयं किमिहास्यते बत मयाबलया ।
रविमनु रस्य विरहाधिगमादिति संध्ययापि सपदि व्यगमि ॥ ९-१

क्रियागतगम्योत्प्रेक्षा फलगा च सा ।

१३५–पतिते पतङ्गमृगराजि निजप्रतिबिम्बरोषित इवाम्बुनिधौ ।
अथ नागयूथमलिनानि जगत्परितस्तमांसि परितस्तरिरे ॥ ९-१८

गुणगतवाच्योत्प्रेक्षा हेतुगा च सा ।

१३६–अवधार्य कार्यगुरुतामभवन्न भयाय सान्द्रतमसंतमसम् ।
सुतनौ स्तनौ च दयितोपगमे तनुरोमराजिपथवेपथवे ॥ ९-२२

क्रियागतगम्योत्प्रेक्षा फलगा च सा ।

१३७–वसुधान्तनिःसृतमिवाहिपतेः पटलं फणामणिसहस्ररुचाम् ।
स्फुरदंशुजालमथ शीतरुचः ककुभं समस्कुरुत माघवनीम् ॥ ९-२५

क्रियागतवाच्योत्प्रेक्षा गुणनिमित्ता च सा ।

१३८–विशदप्रभापरिगतं विबभावुदयाचलव्यवहितेन्दुवपुः ।
मुखमप्रकाशदशनं शनकैः सविलासहासमिव शक्रदिशः ॥ ९-२६

गुणगतवाच्योत्प्रेक्षा हेतुगा च सा ।

१३९–नवचन्द्रिकाकुसुमकीर्णतमःकबरीभृतो मलयजार्द्रमिव ।
ददृशे ललाटतटहारि हरेर्हरितो मुखे तुहिनरश्मिदलम् । ९-२८

गुणगतस्वरूपोत्प्रेक्षा वाच्या च सा ।

१४०–उदमज्जि कैटभजितः शयनादपनिद्रपाण्डुरसरोजरुचा ।
प्रथमप्रबुद्धनदराजसुतावदनेन्दुनेव तुहिनद्युतिना ॥ ९-३०

द्रव्यगतवाच्योत्प्रेक्षा सा च स्वरूपगा ।

१४१–दिवसं भृशोष्णरुचिपादहतां रुदतीमिवानवरतालिरुतैः ।
मुहुरामृशन् मृगधरोऽग्रकरैरुदशिश्वसत् कुमुदिनीवनिताम् ॥ ९-३४

गुणगतवाच्योत्प्रेक्षा क्रियानिमित्ता च सा ।

१४२–भवनोदरेषु परिमन्दतया शयितोऽलसः स्फटिकयष्टिरुचः ।
अवलम्ब्य जालकमुखोपगतानुदतिष्ठदिन्दुकिरणान्मदनः ॥ ९-३६

क्रियागतगम्योत्प्रेक्षा सा च फलगा ।

१४३–अविभाविते मुविषय प्रथम मदनोऽपि नूनममवत्तमसा।
उदिते दिशः प्रकटयत्यमुना यदधर्मधाम्नि धनुराचकृषे ॥ ६-४०

द्रव्यगतवाच्योत्प्रेक्षा हेतुगा च सा।

१४४–ककुभां मुखानि सहसोज्ज्वलयन् दधदाकुलत्वमधिकं रतये।
अदिदीपदिन्दुरपरो दहनः कुसुमेषुमत्रिनयनप्रभवः॥ ६-४२

द्रव्यगतगम्योत्प्रेक्षा उपात्तविषया च सा।

१४५–ध्रुवमागता प्रतिहतिं कठिने मदनेषवः कुचतटे महति।
इतराङ्गवद्य यदिदं गरिमग्लपितावलग्नमगमत्तनुताम् ॥ ६-४६

जातिगतवाच्योत्प्रेक्षा स्वरूपगा च सा।

१४६–मम रूपकीर्तिमहरद्भुवि यस्तदनु प्रसक्तहृदयेयमिति।
त्वयि मत्सरादिव निरस्तदयः सुतरां क्षिणोति खलु तां मदनः। ६-६३

क्रियागतवाच्योत्प्रेक्षा हेतुगा च सा।

१४७–तव सा कथासु परिघट्टयति श्रवणं यदङ्गुलिमुखेन मुहुः।
घनतां ध्रुवं नयति तेन भवद्गुणपूगपूरितमतृप्ततया ॥ ६-६४

गुणगतवाच्योत्प्रेक्षा उपात्तविषया च सा।

१४८–दधति स्फुटं रतिपतेरिषवः शितताम्यदुत्पलपलाशदृशः।
हृदयं निरन्तरबृहत्कठिनस्तनमण्डलावरणमप्यभिदन् ॥ ६-६६

जातिगतगम्योत्प्रेक्षा फलगा च सा।

१४९–दयिताहृतस्य युवभिर्मनसः परिमुष्टतामिव गतं व्ययताम्
उदिते तत सपदि लक्ष्मपदैः शशलाञ्छनेऽनुपदिभिः प्रययौ ॥ ६-७०

गुणगतवाच्योत्प्रेक्षा फलगा च सा।

१५०–निपपात मर्ममभृत श्रवणादसितश्च व. प्रगदितानि कुनम् ।
दयितावलोकविकसन्नयनप्रमरप्रसुप्तमिव वारिरुहम् ॥ ६-७१

क्रियागतवाच्योत्प्रेक्षा हेतुगात्र सा ।

१५१–उपनेतुमुन्नतिमनेकविधं कुचयोर्युगेन तरसा कलिताम् ।
गमयोत्थिताभुपगतः सहमापरिरम्य कश्चन लघूमत्यत् ॥ ६-७२

क्रियागतवाच्योत्प्रेक्षानुप्राणितविषमालङ्कार ॥

१५२–तदयुक्तमङ्ग तवविश्वसृजो न मृतसंदीधिगसहस्रनयम ।
प्रकटीकृतान्यपुर्विर येन खलु स्फुटमिन्द्रताद्य मयि गोत्रभिदा । ६-८०

श्लेषानुप्राणितजातिगतवाच्योत्प्रेक्षा ॥

१५३–आलोक्य प्रियतममंशुके विनीवी यत्तस्थे नमितमुखेन्दु मानवत्या ।
तन्नून पदमवलोकयाबभूव मानस्य द्रुतमपयानमाम्थितस्य ६-८४

जातिगतवाच्योत्प्रेक्षा हेतुगा च सा ॥

१५४–सोपचारमुपशान्तविचार सानुतर्षमनुतर्षपदेन ।
ते मुहूर्तमथ मूर्तमपीप्यन् प्रेम मानमवधूय वधू स्वा ॥ १०-२

क्रियागतवाच्योत्प्रेक्षा हेतुगा च सा ।

१५५–दत्तमिष्टतमया मधु पत्युर्वाहमाप पिवतो रसवत्ताम् ।
यत्सुवर्णमुकुटाग्रुमिरामोच्चेतनाविरहितैरपि पीतम् ॥ १०-६

जातिगतप्रतीयमानोत्प्रेक्षा सा च श्लेषमूला ।

१५६–स्वादनेन सुनयोरविचारादोष्ठतः समचरिष्ट रसोऽन्य ।
अन्यमन्यदिव मध्मधु यूनः स्वादमिष्टमतनिष्ट तदेव ॥ १०-७

क्रियागतवाच्योत्प्रेक्षा हेतुगा च सा ।

१५७–पीतवत्यभिमते मधुतुल्यस्वादमोष्ठरुचकं विदर्दङ्क्षो ।
लभ्यते स्म परिरक्ततयात्मा यावकेन वियतापि युवत्या ॥ १०-६

गुणगतगम्योत्प्रेक्षा सा च तुल्ययोगितानुप्राणिता ।

१५८–पीतशीधुमधुरैर्मिथुनानामानने परिहृतं चषकान्त ।
व्रीडया रुददिवालिविरावैर्नीलनीरजमगच्छदधस्तात् ॥ १०-११

जातिगतवाच्योत्प्रेक्षा स्वरूपगा च सा ।

१५९–अप्रसन्नमपराद्धरि पत्यौ कोपदीप्तमुररीकृतधैर्यम् ।
क्षालितं नु शमितं नु वधूना द्रावितं नु हृदयं मधुवारैः ॥ १०-१४

सदेहानुप्राणिता जातिगतगम्योत्प्रेक्षा ।

१६०–कुर्वता मुकुलिताक्षियुगानामङ्गनादमवमादिनवाचाम् ।
ईर्ष्ययेव हरता ह्रियमासां तद्गुणः स्वयमकारि मदेन ॥ १०-३०

जातिगतवाच्योत्प्रेक्षा स्वरूपगा च सा ।

१६१–क्षीबतामुपगतास्वनुवेलं तासु रोषपरितोषवतीषु ।
अग्रहीन्नु सशरं धनुरुज्झामास नूज्झितनिषङ्गमनङ्गः ॥ १०-३४

यथासङ्ख्यानुप्राणिता गुणगतगम्योत्प्रेक्षा ।

१६२–स समानमुपयन्तरि वध्वाः श्लिष्टवत्युपमपत्नि रसेन ।
आत्मनैव रुरुधे कृतिनेव स्वेदमद्भि वसनं जघनेन ॥ १०-४५

जातिगतवाच्योत्प्रेक्षा स्वरूपगा च सा ।

१६३–पीडिते पुर उरःप्रतिपेषं भर्तरि स्तनयुगेन युवत्याः ।
स्पष्टमेव दलतः प्रतिनार्यास्तन्मयत्वमभवद्धृदयस्य ॥ १०-४६

जातिगतवाच्योत्प्रेक्षा क्रियानिमित्ता च सा ।

१६४–मप्रवेष्टुमिव योषित ईषु श्लिष्यता हृदयमिष्टतमानाम् ।
आत्मन. सततमेव तदन्तर्वर्तिनो न खलु नूनमजानन् ॥ १०-४८

क्रियागतवाच्योत्प्रेक्षा स्वरूपगा च सा ।

१६५–स्नेहनिर्भरमधत्त वधूनामार्द्रता वपुरसंशयमन्त ।
यूनि गाढपरिरम्भिणि वस्त्रक्नोपमम्बु ववृषे यदनेन ॥ १०-४९

क्रियागतगम्योत्प्रेक्षा श्लेषानुप्राणिता च सा ।

१६६–न स्म माति वपुष प्रमदानामन्तरिद्धमसंगमजन्मा ।
यद्वहुर्बहिरवाप्य विकास व्यानशे तनुरुहाण्यपि हर्ष ॥ १०-५०

गुणगतगम्योत्प्रेक्षा श्लेषानुप्राणिता च सा ।

१६७–आहत कुचतटेन तरुण्याः साधु सोढमनुनेति पपात ।
त्रुट्यन प्रियतमोरसि हारात्पुष्पवृष्टिरिव मौक्तिकवृष्टि ॥ १०-७४

क्रियागतवाच्योत्प्रेक्षा उपमानुप्राणिता च सा ।

१६८–सीत्कृतानि मणितं करुणोक्ति स्निग्धमुक्तमलमर्थवचांसि ।
हारभूषणरवाश्च रमण्या कामसूत्रपदतामुपजग्मुः ॥ १०-७५

क्रियागतगम्योत्प्रेक्षा हेतुगा च सा ।

१६९–ईदृशस्य भवत. कथमेतल्लाघवं मुहुरतीव रतेषु ।
क्षिप्तमायतमदर्शयदुर्व्या काञ्चिदाम जघनस्य महत्त्वम् ॥ १०-७७

जातिगतगम्योत्प्रेक्षा हेतुगा च सा ।

१७०–मृष्टचन्दनविशेषकभक्तिर्भ्रष्टभूषणकदर्थितमाल्य ।
सापराध इव मण्डनमासीदात्मनैव सुदृशामुपभोग. ॥ १०-८४

गुणगतवाच्योत्प्रेक्षा हेतुगा च सा ।

१७१–योषित. पतितकाञ्चनकाञ्ची मोहनातिरभसेन नितम्बे ।
मेखलेव परित स्म विचित्रा राजते नवनखक्षतलक्ष्मी. ॥ १०-८५

जातिगतवाच्योत्प्रेक्षा स्वरूपगा च सा ।

१७२–इति मदमदनाभ्या रागिणः स्पष्टरागा-
ननवरतरतश्रीसङ्गिनस्तानवेक्ष्य ।
अभजत परिवृत्ति साथ पर्यस्तहस्ता
रजनिरवनतेन्दुर्लज्जयाधोमुखीव ॥ १०-९१

जातिगतवाच्योत्प्रेक्षा स्वरूपगा च सा ।

१७३–उदयमुदितदीप्तिर्याति य सगतौ मे
पतति न वरमिन्दु सोऽपरामेष गत्वा ।
स्मितरुचिरिव सद्य साभ्यसूय प्रभेति
स्फुरति विशदमेषा पूर्वकाष्ठाङ्गनाया ॥ ११-१२

द्रव्यगतवाच्योत्प्रेक्षा स्वरूपगा च सा ।

१७४–मदरुचिमरुणेनोद्गच्छता लम्भितस्य
त्यजत इव चिराय स्यायिनीमाशु लज्जाम् ।
वमनमिव मुखस्य स्रसते सप्रतीदं
सितकरकरजाल वासवाशायुवत्या ॥ ११-१६

द्रव्यगतवाच्योत्प्रेक्षा निदर्शनानुप्राणिता च सा ।

१७५–अनिमिषमविरामा रागिणा सर्वरात्र
नवनिधुवनलीला: कौतुकेनातिवीक्ष्य ।
इदमुदवसितानामस्फुटालोकसंप-
न्नयनमिव सनिद्रं घूर्णते दैपमर्चि. ॥ ११-१८

क्रियागतवाच्योत्प्रेक्षा हेतुगा च सा ।

१७६–नवकुमुदवनश्रीहासकेलिप्रसङ्गा-
दधिकरुचिरशेषामप्युषा जागरित्वा ।
अयमपरदिशोऽङ्के मुञ्चति स्रस्तहस्त.
शिशयिषुरिव पाण्डु म्लानमात्मानमिन्दु ॥ ११-२२

क्रियागतवाच्योत्प्रेक्षा समासोक्तिमूला च सा ।

१७७–सपदि कुमुदिनीभिर्मीलितं हा क्षपापि
क्षयमगमदपेतास्तारकास्ता. समस्ताः ।
इति दयितकलत्रश्चिन्तयन्नङ्गमिन्दु-
र्वहति कृशमशेषं भ्रष्टशोभं शुचेव ॥ ११-२४

द्रव्यगतवाच्योत्प्रेक्षा क्रियानिमित्ता च सा ।

१७८–प्रकटमलिनलक्ष्मा मृष्टपत्रावलीकै-
रधिगतरतिशोभै. प्रत्युषः प्रोषितश्री· ।
उपहसित इवासौ चन्द्रमा. कामिनीनां
परिणतशरकाण्डापाण्डुभिर्गण्डभागै. ॥ ११-३०

जातिगतवाच्योत्प्रेक्षा क्रियानिमित्ता च सा ।

१७९–सकलमपि निकाम कामलोलान्यनारी-
रतिरभसविमर्दैर्भिन्नवत्यङ्गरागे ।
इदमतिमहदेवाश्चर्यमाश्चर्यधाम्न-
स्तव खलु मुखरागो यन्न भेद प्रयातः ॥ ११-३१

जातिगतगम्योत्प्रेक्षा गुणनिमित्ता च सा ।

१८०–कृतगुरुतरहारच्छेदमालिङ्ग्य पत्यो
परिशिथिलितगात्रे गन्तुमापृच्छमाने ।

विगलितनवमुक्तास्थूलबाष्पाम्बुबिन्दु-
स्तनयुगमबलायास्तत्क्षणं रोदितीव ॥ ११-३८

जातिगतवाच्योत्प्रेक्षा क्रियानिमित्ता च सा।

१८१—नवकनकपिशङ्गं वासराणां विधातुः
ककुभि कुलिशपाणेर्भाति भासां वितानम्।
जनितभुवनदाहारम्भमम्भांसि दग्ध्वा
ज्वलितमिव महाब्धेरूर्ध्वमौर्वानलार्चिः ॥ ११-४३

जातिगतवाच्योत्प्रेक्षा क्रियानिमित्ता च सा।

१८२—विततपृथुवरत्रातुल्यरूपैर्मयूखैः
कलश इव गरीयान्दिग्भिराकृष्यमाणः।
कृतचपलविहंगालापकोलाहलाभि-
र्जलनिधिजलमध्यादेष उत्तार्यतेऽर्कः ॥ ११-४४

जातिगतगम्योत्प्रेक्षा उपमानुप्राणिता च सा।

१८३—पयसि सलिलराशेर्नक्तमन्तर्निमग्नः
स्फुटमनिशमतापि ज्वालया वाडवाग्नेः।
यदयमिदमिदानीमङ्गमुद्यन्दधाति
ज्वलितखदिरकाष्ठाङ्गारगौरं विवस्वान् ॥ ११-४५

द्रव्यगतगम्योत्प्रेक्षा क्रियानिमित्ता च सा।

१८४—प्रतुहिनरविनाशो केवलं नोदयाद्रिः
क्षणमुपरिगतेन क्ष्माभृतः सर्व एव।
नवकरनिकरेण स्पष्टबन्धूकसून-
स्तवकरचितमेते शेखरं बिभ्रतीव ॥ ११-४६

जातिगतवाच्योत्प्रेक्षा क्रियानिमित्ता च सा।

१८५—परिणतमदिराभं भास्करेणांशुबाणै-
स्तिमिरकरिघटायाः सर्वदिक्षु क्षतायाः।

रुधिरमिव वहन्त्यो भान्ति बालातपेन
छुरितमुभयरोधोवारितं वारि नद्यः ॥ ११-४९

जातिगतवाच्योत्प्रेक्षा रूपकानुप्राणिता च सा ।

१८६–अधिरजनि वधूभिः पीतमैरेयरिक्तं
कनकचषकमेतद्रोचनालोहितेन ।
उदयदहिमरोचिर्ज्योतिषाक्रान्तमन्त-
र्मधुन इव तथैवापूर्णमद्यापि भाति ॥ ११-५१

जातिगतवाच्योत्प्रेक्षा हेतुगा च सा ।

१८७–स्नुतमिव शिशिरांशोरंशुभिर्यन्निशासु
स्फटिकमयमराजद्राजताद्रिस्थलाभम् ।
मरकतमकठोरैर्वेश्म काश्मीरजाम्भः-
स्नपितमिव तदेतद्भानुभिर्भाति भानोः ॥ ११-५३

जातिगतवाच्योत्प्रेक्षा क्रियानिमित्ता च सा ।

१८८–चिरमतिरसलौल्याद्बन्धनं लम्भितानां
पुनरयमुदयाय प्राप्य धाम स्वमेव ।
दलितदलकपाटः षट्पदानां सरोजे
सरभस इव गुप्तिस्फोटमर्कः करोति ॥ ११-६०

द्रव्यगतवाच्योत्प्रेक्षा क्रियानिमित्ता च सा ।

१८९–युगपदयुगसप्तिस्तुल्यसंख्यैर्मयूखै-
र्दशशतदलभेदं कौतुकेनाशु कृत्वा ।
श्रियमलिकुलगीतैर्लालितां पङ्कजान्त-
र्भवनमधिशयानामादरात्पश्यतीव ॥ ११-६१

द्रव्यगतवाच्योत्प्रेक्षा क्रियानिमित्ता च सा ।

१९०–उदयमिव कराग्रेण निष्पीड्य सद्यः
शशधरमहरादौ रागवानुष्णरश्मिः ।

अवकिरति नितान्तं कान्तिनिर्यासमन्द-
स्तुतनवजलपाण्डुं पुण्डरीकोदरेषु ॥ ११-६२

द्रव्यगतवाच्योत्प्रेक्षा उपमानुप्राणिता च सा।

१६१-प्रविशति चिराय द्योतितारोपलोके
दशशतकरमूर्ताविक्षिणीव द्वितीये।
सितकरवपुषामी लक्ष्यते सम्प्रति द्यौ-
र्विगलितकिरणेन व्यञ्जितैकेक्षणेव ॥ ११-६३

द्रव्यगतवाच्योत्प्रेक्षा गुणनिमित्ता च सा।

१६२-उत्क्षिप्तगात्रः स्म विडम्बयन्नभः समुत्पतिष्यन्तमगेन्द्रमुच्चकैः।
आकुञ्चितप्रोहनिरूपितक्रमं करेणुरारोहयते निषादिनम् ॥ १२-५

जातिगतगम्योत्प्रेक्षा क्रियानिमित्ता च सा।

१६३-यान्तोऽस्पृशन्तश्चरणैरिवावनिं जवात्मनोर्णैरनितः प्रकीर्णकैः।
महीपि सेनातुरगा नविस्मयैरलूनपक्षा इव मेनिरे जनैः ॥ १२-१७

जातिगतवाच्योत्प्रेक्षा हेतुगा च सा।

१६४-तूर्णं प्रणेत्रा कृतनादमुच्चकैः प्रणोदितं वेसरयुग्यमध्वनि।
आत्मीयनेमिक्षतमान्द्रमेदिनीरजश्चयाक्रान्तिभयादिवाद्रवत् ॥ १२-१९

जातिगतवाच्योत्प्रेक्षा स्वरूपगा च सा।

१६५-आसेदुमस्मानवधानतः पुरा
चलत्यसावित्युपकर्णयन्नसौ।
गीतानि गोप्याः कलम मृगव्रजो
न नूनमलोति हरिर्व्यलोकयत् ॥ १२-४३

जातिगतवाच्योत्प्रेक्षा स्वरूपगा च सा।

१९६–आलोकयामास हरिर्महीधरानधिश्रयन्तीर्गजताः परःशताः।
उत्पातवातप्रतिकूलपातिनीरुपत्यकाभ्यो बृहती शिला इव ॥१२-५०

जातिगतवाच्योत्प्रेक्षा स्वरूपगा च सा।

१९७–प्रासादशोभातिशयालुभिः पथि प्रभोर्निवासाः पटवेश्मभिर्बभुः।
नूनं सहानेन वियोगविक्लवा पुरः पुरश्रीरपि निर्ययौ तदा ॥ १२-६३

जातिगतवाच्योत्प्रेक्षा स्वरूपगा च सा।

१९८–वर्त्म द्विपानां विरुवन्त उच्चकैर्वनेचरेभ्यश्चिरमाचचक्षिरे।
गण्डस्थलाघर्षगलन्मदोदकद्रवद्रुमस्कन्धनिलायिनोऽलयः ॥ १२-६४

जातिगतगम्योत्प्रेक्षा हेतुगा च सा।

१९९–उद्धूतमुच्चैर्ध्वजिनीभिरंशुभिः प्रतप्तमभ्यर्णतया विवस्वतः।
माह्लादिकह्लारसमीरणाहते पुरः पपाताम्भसि यामुने रजः ॥ १२-६६

जातिगतगम्योत्प्रेक्षा गुणनिमित्ता च सा।

२००–अभ्युद्यतस्य क्रमितुं जवेन गां तमालनीला नितरां धृतायतिः।
सीमेव सा तस्य पुरःक्षणं बभौ बलाम्बुराशेर्महतो महापगा ॥१२-७०

जातिगतवाच्योत्प्रेक्षा रूपकानुप्राणिता च सा।

२०१–लोलैररित्रैश्चरणैरिवाभितो जवाद्व्रजन्तीभिरसौ सरिज्जनैः।
नौभिः प्रतेरे परितः प्लवोदितप्रभोनिमीलल्ललनावलम्बितैः॥ १२-७१

जातिगतगम्योत्प्रेक्षा उपमामूला च सा।

२०२–सीमन्त्यमाना यदुभूभृता बलैर्बभौ तरङ्गैर्गवलासितद्युतिः।
सिन्दूरितानेकपककणाङ्किता तरङ्गिणी वेणिरिवायता भुवः ॥१२-७५

जातिगतवाच्योत्प्रेक्षा स्वरूपगा च सा।

२०३–अव्याहतक्षिप्रगतैः समुच्छ्रितानुज्झितद्राघिमभिर्गरीयसः ।
नाव्य पथ. केचिदतारिपुर्भुजे क्षिपद्भिरूर्मीनपरैरिवोर्मिभिः ॥१२-७६

जातिगतवाच्योत्प्रेक्षा स्वरूपगा च सा ।

२०४–यदुमर्त्‌रागमनलब्धजन्मन. प्रमदादमानिव पुरे महीयसि ।
सहसा तत. स सहितोऽनुजन्मभिर्वसुधाधिपोऽभिमुखमस्य निर्ययौ ॥१३-२

गुणगतवाच्योत्प्रेक्षा हेतुगा च सा ।

२०५–गतया निरन्तरनिवासमभ्युर परिनानि नूनमवमुच्य वारिजम् ।
कुरुराजनिर्दयनिपीडनानयान्मुखमध्यरोहि मुरविद्विप श्रिया ॥१३-११

गुणगतवाच्योत्प्रेक्षा क्रियानिमित्ता च सा ।

२०६–शिरसि स्म जिघ्रति सुरारिबन्धने छन्वामन विनयवामनं तदा ।
यशसेव वीर्यविजितामरद्रुमप्रसवेन वासितशिरोरहे नृपः ॥ १३-१२

जातिगतवाच्योत्प्रेक्षा गुणनिमित्ता च सा ।

२०७–गतयोरभेदमिति सैन्ययोस्तयोरथ भानुजह्नुतनयाम्भसोरिव ।
प्रतिनादितामरविमानमालकैर्नितरा मुदा परमयेव दध्वने ॥ १३-२१

जातिगतवाच्योत्प्रेक्षा उपमानुप्राणिता च सा ।

२०८–मखमीक्षितुं क्षितिपतेरुपेयुषां परितः प्रकल्पितनिकेतनं बहिः ।
उपरुध्यमानमिव भूभृता बलैः पुटभेदन दनुसुतारिरैक्षत ॥ १३-२६

द्रव्यगतवाच्योत्प्रेक्षा क्रियानिमित्ता च सा ।

२०९–अवलोकनाय सुरविद्विषा द्विष. पटहप्रणादविहितोपहूतयः ।
अवधीरितान्यकरणीयसत्वरा प्रतिरथ्यमीयुरथ पौरयोषितः ॥१३ ३०

जातिगतगम्योत्प्रेक्षा क्रियानिमित्ता च सा ।

२१०–अधिरुह्य या निजनिकेतमुच्चकैः पवनावधूतवसनान्तयैकया ।
विहितोपशोभमुपयाति माधवे नगरं व्यरोचत पताकयेव तत् ॥ १३-३६

जातिगतवाच्योत्प्रेक्षा स्वरूपगा च सा ।

२११–करयुगमपद्ममुकुलापवर्जितैः प्रतिवेश्म लाजकुसुमैरवाकिरन् ।
अवदीर्णशुक्तिपुटमुक्तमौक्तिकप्रकरैरिव प्रियरथाङ्गमङ्गनाः ॥ १३-३७

जातिगतवाच्योत्प्रेक्षा स्वरूपगा च सा ।

२१२–धरणीधरेन्द्रदुहितुर्भयादसौ विषमेक्षणः स्फुटममूर्न पश्यति ।
मदनेन वीतभयमित्यधिष्ठिताः क्षणमीक्षते स्म स पुरोविलासिनोः ॥१३-३८

द्रव्यगतप्रम्योत्प्रेक्षा क्रियानिमित्ता च सा ।

२१३–निजसौरभभ्रमितभृङ्गपक्षतिव्यजनानिलक्षयितघर्मवारिणा ।
अभिशौरि काचिदनिमेषदृष्टिना पुरदेवतेव वपुषा व्यभाव्यत ॥१३-४५

जातिगतवाच्योत्प्रेक्षा स्वरूपगा च सा ।

२१४–अभियाति नः सतृष एष चक्षुषो हरिरित्यखिद्यत नितम्बिनीजनः ।
न विवेद यः सततमेनमीक्षते न वितृष्णतां व्रजति खल्वसावपि ॥१३-४६

गुणगतवाच्योत्प्रेक्षा क्रियानिमित्ता च सा ।

२१५–अकृतस्वसद्मगमनादरः क्षणं लिपिकर्मनिर्मित इव व्यतिष्ठत ।
गतमच्युतेन सह शून्यतां गतः प्रतिपालयन्मन इवाङ्गनाजनः ॥१३-४७

जातिगतवाच्योत्प्रेक्षा क्रियानिमित्ता च सा ।

२१६–अधिरात्रि यत्र निपतन्नभोलिहां कलधौतशिलवेश्मनां रुचौ ।
पुनरप्यवापदिव दुग्धवारिधिक्षणगर्भवासमनिदाघदीधितिः ॥ १३-५१

द्रव्यगतवाच्योत्प्रेक्षा उपात्तविषया च सा ।

२१७–विपुलालवालभृतवारिदर्पणप्रतिमागतैरभिविरेजुरात्मभिः ।
यदुपान्तिकेषु दधतो महीरुहः सपलाशराशिमिव मूलसंहतिम् ॥१३-५७

जातिगतवाच्योत्प्रेक्षा स्वरूपगा च सा ।

२१८–सकले च तत्र गृहमागते हरौ नगरेऽप्यकालमहमादिदेश सः ।
सततोत्सवं तदिति नूनमुन्मुदो रभसेन विस्मृतमभून्महीभृतः ॥१३-६९

गुणगतवाच्योत्प्रेक्षा उपात्तविषया च सा ।

२१९–स जगाद गिरमुद्गिरन्निव स्नेहमाहितविकासया दृशा ।
यज्ञकर्मणि मनः समादधद्वाग्विदां वरमकद्वदो नृपः ॥ १४-१

क्रियागतवाच्योत्प्रेक्षा स्वरूपगा च सा ।

२२०–लोलहेतिरसनाशतप्रभामण्डलेन लसता हसन्निव ।
प्राज्यमाज्यमसकृद्वषट्कृतं निर्मलीमसमलीढ पावकः ॥ १४-२५

जातिगतवाच्योत्प्रेक्षा भावाभिमानी क्रियानिमित्ता च सा ।

२२१–उन्नमन्सपदि धूम्रयन्दिशः सान्द्रतां दधदधःकृताम्बुदः ।
धामिथाय दहनस्य केतनः कीर्तयन्निव दिवौकसां प्रियम् ॥ १४-२८

जातिगतवाच्योत्प्रेक्षा फलस्वरूपगा च सा ।

२२२–गच्छतापि गगनाग्रमुच्चकैर्यस्य भूधरगरीयसाङ्घ्रिणा ।
क्रान्तकंधर इवावलो बलिः स्वर्गभर्तुरगमत्सुबन्धुताम् ॥ १४-३६

जातिगतवाच्योत्प्रेक्षा क्रियानिमित्ता च सा ।

२२३–ग्रामतोऽस्य ददृशुर्दिवौकसो दूरमूरुमतिनीलमायतम् ।
व्योम्नि दिव्यसरिदम्बुपद्धतिस्पर्धयेव यमुनौघमुत्थितम् ॥ १४-७१

द्रव्यगतवाच्योत्प्रेक्षा स्वरूपगुणनिमित्ता च सा ।

२२४-अभितर्जयन्निव समस्तनृपगणमसावकम्पयत् ।
लोलमुकुटमणिरश्मि गणैरमलैः प्रकम्पितजगत्त्रय शिरः ॥१५-२

क्रियागतवाच्योत्प्रेक्षा स्वरूपगा च सा ।

२२५-कनकाङ्गदद्युतिभिरस्य गमितमंसपिशङ्गताम् ।
क्रोधमयशिखिशिखापटलैः परितः परीतमिव बाहुमण्डलम् ॥ १५-७

जातिगतवाच्योत्प्रेक्षा उपात्तविषया च सा ।

२२६-रुद्रसन्निधानमिव तस्य पुनरपि तृतीयचक्षुषा ।
क्रूरमजनि कुटिलभ्रु गुरुभ्रुकुटीकठोरितललाटमाननम् ॥ १५-८

जातिगतवाच्योत्प्रेक्षा स्वरूपगा च सा ।

२२७-इति भीष्मभाषितवचोऽर्थमधिगतवतामिव क्षणात् ।
क्षोभमगमदतिमात्रमयो शिशुपालपक्षपृथिवीभृतां गणः ॥ १५-९

क्रियागतवाच्योत्प्रेक्षा गुणनिमित्ता च सा ।

२२८-प्रविदारितारुणतरोग्रनयनकुसुमोज्ज्वलः स्फुरन् ।
प्रातरहिमकरतापनतनुर्विपदद्रुमोऽपर इवाभवद्द्रुमः ॥ १५-१०

द्रव्यगतवाच्योत्प्रेक्षा रूपकानुप्राणिता च सा ।

२२९-अभिधित्सतः किमपि राहुवदनविकृतं व्यभाव्यत ।
ग्रस्तगगनाधरमिवोपलमसितदन्तपङ्क्ति मुखमुत्तमौजसः ॥ १५-११

जातिगतवाच्योत्प्रेक्षा हेतुगा च सा ।

२३०-गुरुकोपरुद्धपदमापदमितयवनस्य रौद्रताम् ।
व्यात्तमशितुमिव सर्वजगद्विकरालमास्यकुहरं विवक्षतः ॥ १५-१२

जातिगतवाच्योत्प्रेक्षा स्वरूपगा च सा ।

२३१–परितश्च धौतमुसलत्वमविलसदहिमांशुमण्डला: ।
तेनुरतनुवपुष पृथिवी स्फुटलक्ष्यतेजस इवात्मजा. धिय. ॥ १५-७८

जातिगतवाच्योत्प्रेक्षा हेतुगा च सा ।

२३२–अधिमण्डलोद्धतपरागघनवलयमध्यवर्तिनः ।
पेतुरनलय इवानकैर्गुरुनि स्वनव्यथितजन्तवो रथा ॥ १५-७९

जातिगतवाच्योत्प्रेक्षा रूपकानुप्राणिता च सा ।

२३३–अविवल्मत प्रियतमस्य निगडमिव चक्षुरक्षिपन् ।
नीलनलिनदलदामरुचि प्रतिपादयुग्ममचिरोढसुन्दरी ॥ १५-८६

जातिगतवाच्योत्प्रेक्षा क्रियानिमित्ता च सा ।

२३४–सह कज्जलेन विरराज नयनकमलाम्बुसतति ।
गण्डफलकमभित सुतनो पदवीव शोकमयकृष्णवर्त्मनः ॥ १५-९०

जातिगतवाच्योत्प्रेक्षा फलगा च सा ।

२३५–विदुषीव दर्शनममुष्य युवतिरतिदुर्लभं पुनः ।
यान्तमनिमिषमतृप्तमनाः पतिमोक्षते स्म भृशमा दृशः पथः ॥ १५-९४

क्रियागतवाच्योत्प्रेक्षा हेतुगा च सा ।

२३६–अलक्ष्यत क्षणदलिताङ्गदे गदे करोदरप्रहितनिजांसधामनि ।
समुल्लसच्छकलितपाटलोपलैः स्फुलिङ्गवान्स्फुटमिव कोपपावकः ॥ १७-३

जातिगतवाच्योत्प्रेक्षा स्वरूपगा च सा ।

२३७–यदुत्पतत्पृथुतरहारमण्डलं व्यवतत द्रुतमनिहूतमुत्थाय .
बृहच्छिलातलकठिनांसघट्टितं ततोऽभवद्भ्रमितमिवान्तिकं सदः ॥ १७-५

गुणगतवाच्योत्प्रेक्षा स्वरूपगा च सा ।

२३८–निरायतामनलशिखोज्ज्वलां ज्वलन्नखप्रभाकृतपरिवेषसंपदम् ।
अविभ्रमद्भ्रमदनलोलमुत्काकृति प्रदेशिनी जगदीव दग्धुमाहुतिः ।१७ ६

जातिगतवाच्योत्प्रेक्षा हेतुगा च सा ।

२३९–दुरीक्षतामभजत मन्मथस्तया यया पुरा परिचितदाहधार्ष्ट्यं या ।
ध्रुवं पुरः समरममु तृतीयया हरोऽपि न व्यसहत वीक्षितु दृशा १७-१०

द्रव्यगतवाच्योत्प्रेक्षा गुणनिमित्ता च सा ।

२४०–मधुकूपैरविरलमम्बुबिन्दुभिर्गवेषणः परिणतदाडिमारुणै ।
स मत्सरस्फुटितवपुर्विनिःसृतैर्बभौ चिरं निचिन इवासृजां लवैः ।१७-१४

द्रव्यगतवाच्योत्प्रेक्षा क्रियानिमित्ता च सा ।

२४१–प्रतिक्षणं विधुवति वारणे शिरः शिखिद्युतः कनककिरीटरश्मयः ।
अलङ्घितं युवमधुना विनान्तवमी क्षमापतीनिति निरराजयन्निव ।१७-१६

जातिगतवाच्योत्प्रेक्षा क्रियानिमित्ता च सा ।

२४२–मनोहरैः प्रकृतिमनोरमाकृतिर्भयप्रदं समितिषु भीमदर्शनैः ।
मदैवतैः सततमयानपायिभिर्निजाङ्गवन्मुरजिदसेव्यतायुधैः ॥ १७-१६

द्रव्यगतगम्योत्प्रेक्षा गुणनिमित्ता च सा ।

२४३–बबृंहिरे गजपतयो महानकाः प्रदध्वनुर्जयतुरगा जिहेषिरे ।
असंभवद्रिरिवरगह्वरैरभूत्तदा रवैर्दलित इव स्व आश्रयः ॥ १७-३१

क्रियागतवाच्योत्प्रेक्षा हेतुगा च सा ।

२४४–अनारतं रसति जयाय दुन्दुभौ मधुद्विषः फलदलघुप्रतिस्वनैः ।
विनिष्पतन्मृगपतिभिर्गुहामुखैर्गताः परां मुदमहसन्निवाद्रयः । १७-३२

जातिगतवाच्योत्प्रेक्षा क्रियानिमित्ता च सा ।

२४५–सविक्रमक्रमणचलैरितस्ततः प्रकीर्णकैः क्षिपत इव क्षिते रजः ।
स्यरंसिपुर्न खलु जनस्य दृष्टयस्तुरंगमादभिनवभाण्डमारिणः ।१७-३६

जातिगतवाच्योत्प्रेक्षा गुणनिमित्ता च सा ।

२४६–पिपासितामथ मधुभिद्विवस्वता जनो जरन्महिषविषाणधूसराम् ।
पुरः पतत्परबलरेणुमालिनीमलक्षयद्दिशमभिधूमितामिव ॥ १७-४१

जातिगतवाच्योत्प्रेक्षा रूपकानुप्राणिता च सा ।

२४७–ध्वजांशुकैर्ध्रुवमनुकूलमारुतप्रसारितैः प्रसभकृतोपहूतयः ।
यदूनभिद्रुततरमुद्यतायुधाः क्रुधा परं रयमरयः प्रपेदिरे ॥ १७-४६

जातिगतवाच्योत्प्रेक्षा क्रियानिमित्ता च सा ।

२४८–पुरा शरक्षतिजनितानि संयुगे नयन्ति नः प्रसभमसृञ्जि पङ्कताम् ।
इति ध्रुवं व्यलगिषुरात्तभीतयः समुच्छ्रितैरनलसखस्य केतवः ।१७-५५

जातिगतवाच्योत्प्रेक्षा फलगा च सा ।

२४९–शिरोरुहैरलिकुलकोमलैरमी मुधा मृधे मृषत युवान एव मा ।
बलोद्धतं धवलितमूर्धजानिति ध्रुवं जनाञ्जरत इवाकरोद्रजः ।।१७-५८

गुणगतवाच्योत्प्रेक्षा हेतुगा च सा ।

२५०–द्रुतद्रवद्रथचरणक्षतक्षमातलोल्लसद्बहुलरजोवगुण्ठितम् ।
युगक्षयक्षणनिरवग्रहे जगत्पयोनिधेर्जल इव मग्नमाबभौ ॥ १७-६०

द्रव्यगतवाच्योत्प्रेक्षा फलगा च सा ।

२५१–गजव्रजाक्रमणभरावनम्रया रसातलं यदखिलमानशे भुवा ।
नभस्तलं बहुलतरेण रेणुना ततोऽगमत्त्रिजगदिवैकतां स्फुटम् ॥ १७-६२

क्रियागतवाच्योत्प्रेक्षा स्वरूपगा च सा ।

२५२–मदाम्भसा परिगलितेन सप्तधा गजाङ्गनः शमितरजस्कयानघः ।
दर्पैर्यवस्थितघनपांसुमण्डलानलोकयत्ततपटमण्डपानिव ॥ १७-६८

जातिगतवाच्योत्प्रेक्षा स्वरूपगा च सा ।

२५३–संजग्माते तावपायानपेक्षौ सेनाम्भोधी धीरनादौ रयेण ।
पक्षच्छेदात्पूर्वमेकत्र देशे वाञ्छन्तौ वा विन्ध्यसह्यौ निलेतुम् ॥ १८-१

वा शब्द इवार्थः । जातिगतवाच्योत्प्रेक्षा सा च हेतुस्वरूपगा ।

२५४–वल्गाविद्धा धौरितेन प्रयातामश्वीयानामुच्चकैरुच्चलन्तः ।
रौक्मा रेजुः स्थासका मूर्तिभाजो दर्पस्येव व्याप्तदेहस्य शेषाः ॥ १८-५

अमावाभिमाने गुणगतवाच्योत्प्रेक्षा सा च स्वरूपगा ।

२५५–संक्रीडन्ती तेजिनाश्वस्य रागादुद्यम्यारामग्रकायोत्थितस्य ।
रंहोभाजामक्षधूः स्यन्दनानां हाहाकारं प्राजितुः प्रत्यनन्दन् ॥ १८-७

जातिगतगम्योत्प्रेक्षा सा चोपात्तविषया ।

२५६–कुर्वाणानां सांपरायान्तरायं भूरेणूनां मृत्युना मार्जनाय ।
संमार्जन्यो नूनमुद्धूयमाना भान्ति स्मोच्चैः केतनानां पताकाः ॥ १८-८

जातिगतवाच्योत्प्रेक्षा सा चोपात्तविषया ।

२५७–घण्टानादो निस्वनो डिण्डिमानां ग्रैवेयाणामारवो बृंहितानि ।
आमेतीव प्रत्यवोचन् गजानामुत्साहार्थं वाचमाधोरणस्य ॥ १८-१०

गुणगतवाच्योत्प्रेक्षा सा च क्रियानिमित्ता ।

२५८–चेतुं जैत्राः शंकिरे नारिसैन्यैः पश्यन्तोऽधो लोकमस्तेषुजालाः ।
नागारूढाः पार्वतानि श्रयन्तो दुर्गाणीव ग्रामहीनाश्रमानि ॥ १८-२४

जातिगतवाच्योत्प्रेक्षा सा च स्वरूपगा ।

२५९-भृङ्गश्रेणीश्यामभासा समूहैर्नाराचानां विद्धनीरन्ध्रदेहः ।
निर्भीस्त्वादाहवेनाहतेच्छो हृष्यन्हस्ती हृष्टरोमेव रेजे ॥ १८-४१

गुणनिमित्तवाच्योत्प्रेक्षा सा च हेतुगा ।

२६०-ग्रामन्दन्तौ दन्तिनः सादिमिक्यादीपादण्डौ मृत्युशय्यातलस्य ।
मेन्यैरन्यस्तत्क्षणादाप्तशङ्कं स्वर्गस्यौच्चैर्गन्तुमारोधिरूढः ॥ १८-४३

क्रियानिमित्ता वाच्योत्प्रेक्षा सा च स्वरूपगा ।

२६१-कुर्वञ्ज्योत्स्नाविप्रुषां तुल्यरूपस्तारस्ताराजालसारामिव द्याम् ।
खड्गाघातैर्दारिताद्दन्तिकुम्भादाभाति स्म प्रोच्छलन्मौक्तिकौघ.।१८-४७

जातिगतवाच्योत्प्रेक्षा सा चोपमानुप्राणिता ।

२६२-हस्तेनाग्रे वीतभीतिं गृहीत्वा कश्चिद्व्यालं क्षिप्तवानूर्ध्वमुच्चैः ।
ग्रासीनानां व्योम्नि तस्यैव हेतोःस्वर्गस्त्रीणामर्पयामास नूनम्।१८-४८

क्रियागतवाच्योत्प्रेक्षा सा च हेतुगा ।

२६३-तूर्यारावैराहितोत्तालतालैर्गायन्तीभिः काहलं काहलाभिः ।
नृत्ते चक्षुः शून्यहस्तप्रयोगं काये कूजन्त्युक्तमैर्जहाम ॥ १८-५४

गुणगतगम्योत्प्रेक्षा सा च गुणनिमित्ता ।

२६४-गत्वा नूनं वैबुधं सद्म रम्यं मूर्च्छाभाजामाजगामान्तरात्मा ।
भूयो दृष्टप्रत्ययाः प्राप्तसंज्ञाः साधीयस्ते यद्रणायाद्रियन्ते ॥ १८-६३

द्रव्यगतवाच्योत्प्रेक्षा सा च हेतुगा ।

२६५-भग्नैर्दण्डैरातपत्राणि भूमौ पर्यस्तानि प्रौढचन्द्रद्युतीनि ।
आहाराय प्रेतराजस्य रौप्यस्थालानीव स्थापितानि स्म मान्ति ।१८-६७

जातिगतवाच्योत्प्रेक्षा सा च स्वरूपगा ।

२६६–रेजुर्भ्रष्टा वक्षस. कुङ्कुमाङ्का मुक्ताहारा: पार्थिवानां व्यसूनाम् ।
हासाल्लक्ष्या पूर्णकामस्य मन्ये मृत्योर्दन्ता. पीतरक्तासवस्य ।१८-६८

जातिगतवाच्योत्प्रेक्षा सा च उपात्तविषया ।

२६७–निम्नेष्वोघी भूतमस्त्रक्षतानामस्र भूमौ यच्चकामाचचार ।
रागार्थं तत्किं नु कौसुम्भमम्भ सव्यानानामन्तकान्त पुरस्य ।१८-६९

जातिगतगम्योत्प्रेक्षा सा चोपात्तविषया ।

२६८–उत्क्रान्तानामाभिपायोपरिष्टादध्याकाश बभ्रमु पत्रवाहा. ।
मूर्ता प्राणा नूनमद्याप्यवेक्षामासु काय त्याजिता दारुणास्त्रै १८-७२

गुणगतवाच्योत्प्रेक्षा सा च क्रियानिमित्ता ।

२६९–ओजोभाजा यद्रणे संस्थितानामादत्तीव साधमङ्गेन नूनम् ।
ज्वालाव्याजादुद्वमन्ती तदन्तस्तेजस्तारं दीप्तजिह्वा चवाशे ॥ १८-७५

जातिगतवाच्योत्प्रेक्षा सा च क्रियानिमित्ता ।

२७०–क्रव्यात्पूर्णः पुष्कराण्यानकाना प्रत्याशाभिर्मेदसो दारितानि ।
आभीलानि प्राणिन प्रत्यवस्यन्कालो नूनं व्याददावाननानि ॥ १८-७८

जातिगतवाच्योत्प्रेक्षा सा च फलगा ।

२७१–कीर्णा रेजे साजिभूमि समन्तादप्राप्ताङ्गि आपणभाजा शतौघैः ।
बह्वारम्भैरर्धसंयोजितैर्वा रूपैः स्रष्टु मृष्टिकर्मान्तशाला ॥ १८-७६

जातिगतगम्योत्प्रेक्षा सा च स्वरूपगा ।

२७२–इत्यालिङ्गितमालोक्य जयलक्ष्म्या भयध्वजम् ।
क्रुद्धयेव क्रुधा सद्य प्रपेदे चेदिभूपति. ॥ १९-२४

गुणगतवाच्योत्प्रेक्षा सा च फलगा ।

२७३–लीलासिकोलियकुला यमेस्येव स्वसा स्वयम् ।
चिकीर्षुल्लसल्लोहवर्मश्यामा सहायताम् ॥ १६-२८

गुणगतवाच्योत्प्रेक्षा सा च स्वरूपगा ।

२७४–निपीडनादिव मिथो दानतोयमनारतम् ।
वपुषामदयापातादिभानामभितोऽगलत् ॥ १६-६८

जातिगतवाच्योत्प्रेक्षा–सा च गुणनिमित्ता ।

२७५–परक्षते गजे भृङ्गैः सविषादनिपादिनि ।
स्तव्याजेन रुदित तत्रासीदेतिमीदति ॥ १६-७२

गुणगतवाच्योत्प्रेक्षा सा च फलगा ।

२७६–अन्तकस्य पृथौ तत्र शयनीय इवाहवे ।
दशनव्यसनादीयुर्मत्कुणत्वं मतङ्गजाः ॥ १६-७२

जातिगतवाच्योत्प्रेक्षा सा च गुणनिमित्ता ।

२७७–हृते. कीर्णा मही रेजे दन्तैर्गात्रैश्च दन्तिनाम् ।
क्षुण्णलोकासुभिर्मृत्योर्मुसलोलूखलैरिव ॥ १६-८१

गुणगतवाच्योत्प्रेक्षा सा च स्वरूपगा ।

२७८–अपूर्वयेव तत्कालसमागमसकामया ।
दृष्टेन राजन्वपुषा कटाक्षैर्विजयश्रिया ॥ १६-८२

द्रव्यगतवाच्योत्प्रेक्षा सा च गुणनिमित्ता ।

२७९–वररोऽविवेरो वैरिविवारी वारिरारव ।
विववार वरो वैर वीरो रविरिवौर्वरः ॥ १६-१०१

द्रव्यगतवाच्योत्प्रेक्षा सा च द्व्यक्षरमूला ।

२८०—नामाक्षराणां मलना मा भूद्भुतुरतः स्फुटम् ।
अगृह्णत पराङ्गानामसूनस्त्र न मार्गणाः ॥ १९-११०

द्रव्यगतगम्योत्प्रेक्षा सा च हेतुगा ।

२८१—सदामदबलप्रायः समुद्धतरसो बभौ ।
प्रतीतविक्रमः श्रीमान्हरिर्हरिरिवापरः ॥ १९-११६

द्रव्यगतवाच्योत्प्रेक्षा सा च श्लेषगर्भा ।

२८२—द्विधा त्रिधा चतुर्धा च तमेकमपि शत्रवः ।
पश्यन्तः स्पर्धया सद्य स्वयं पञ्चत्वमाययुः ॥ १९-११७

द्रव्यगतगम्योत्प्रेक्षा सा च गुणनिमित्ता ।

२८३—स निरायतकेतनांशुकान्तः कलनिक्वाणकरालकिङ्किणीकः ।
विरराज रिपुक्षयप्रतिज्ञामुखरो मुक्तशिखः स्वयं नु मृत्युः ॥ २०-४

जातिगतगम्योत्प्रेक्षा सा च स्वरूपगा ।

२८४—अभिवीक्ष्य विदर्भराजपुत्रीकुचकाश्मीरजचिह्नमच्युतोरः ।
विरसेवितयापि चेदिराजः सहसावाप रुपा तदैव योगम् ॥ २०-६

क्रियागतवाच्योत्प्रेक्षा सा च गुणनिमित्ता ।

२८५—समकालमिवाभिलक्षणीयग्रहसन्धानविकर्षणापवर्गैः ।
अथ साभिसरं शरैस्तरस्वी स तिरस्कर्तुमुपेन्द्रमभ्यवर्षत् ॥ २०-८

क्रियागतवाच्योत्प्रेक्षा सा च उपात्तविषया ।

२८६—शितशल्यमुखावदीर्णमेघक्षरदम्भःस्फुटतीव्रवेदनानाम् ।
स्रवदस्रुतीव चक्रवालं ककुभामौर्णविपुः सुवर्णपुङ्खाः ॥ २०-१४

जातिगतवाच्योत्प्रेक्षा सा च फलगा ।

२८७-विनिवारितभानुतापमेकं सकलस्यापि मुरद्विषो बलस्य ।
शरजालमथ समं समन्तादुरु सद्मेव नराधिपेन तेने ॥ २०-१६

जातिगतवाच्योत्प्रेक्षा सा च स्वरूपगा ।

२८८-उरसा विततेन पातितांसः स मयूराञ्चितमस्तकस्तदानीम् ।
क्षणमालिखितो नु सौष्ठवेन स्थिरपूर्वापरमुष्टिराबभौ वा ॥ २०-

द्रव्यगतवाच्योत्प्रेक्षा सा च गुणनिमित्ता ।

२८९-स दिवं समचिच्छदच्छरौघैः कृततिग्मद्युतिमण्डलापलापैः ।
ददृशेऽथ च तस्य चापयष्ट्यामिषुरेकैव जनैर्मुहुर्विमृष्टा ॥ २०-२८

गुणगतवाच्योत्प्रेक्षा सा च स्वरूपगा ।

२९०-सविषश्वसनोद्धतोरुधूमव्यवधिम्लानमरीचि पन्नगानाम् ।
उपरागवतेव तिग्मभासा वपुरौदुम्बरमण्डलाभमूहे ॥ २०-४५

द्रव्यगतवाच्योत्प्रेक्षा सा च फलगा ।

२९१-कृतमण्डलबन्धमुल्लसद्भिः निरसि प्रस्फुरन विलम्बमानैः ।
व्यरुचज्जनता भुजंगभोगैर्दलितेन्दीवरमालभारिणीव ॥ २०-४८

गुणगतवाच्योत्प्रेक्षा सा च उपमानुप्राणिता ।

२९२-ज्वलितानललोलपल्लवान्ताः स्फुरदग्रापदपत्रपीतभासः ।
क्षणमात्रभवाभभावकाले सुतरामातुरिवायति पताकाः ॥ २०-५४

क्रियागतवाच्योत्प्रेक्षा सा च स्वरूपगा ।

२९३-तपनीयनिकर्षराजिगौरस्फुरदुत्तालतडिच्छटाट्टहासम् ।
अनुबद्धसमुद्धताम्बुवाहध्वनिताडम्बरमम्बरं बभूव ॥ २०-६८

गुणगतगम्योत्प्रेक्षा सा च स्वरूपगा ।

२६४–सवितुः परिभावुकैर्मरीचीनचिरात्स्यक्तमतङ्गजाङ्गभाभिः ।
जलदैरभितः स्फुरद्भिरुच्चैर्विदधे केतनतेव धूमकेतोः ॥ २०-६६

जातिगतवाच्योत्प्रेक्षा सा च स्वरूपगा ।

२६५–ज्वलतः शमनाय चित्रभानोः प्रलयाप्लावमिवाभिदर्शयन्तः ।
ववृषुर्वृषनादिनो नदीनां प्रतटारोपितवारि वारिवाहाः ॥ २०-७०

क्रियागतवाच्योत्प्रेक्षा सा च स्वरूपगा ।

---

# अतिशयोक्तिः

१–प्रथ प्रयत्नोन्नमितानमत्फणैर्धृते कथंचित्फणिनां गणैरधः ।
न्यधायिषातामभिदेवकीसुतं सुतेन धातुश्चरणौ भुवस्तले ॥ १-१३

असंबंधेऽपि संबंधाभिधानात् संबंधातिशयोक्तिः ।

२–युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत ।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः ॥ १-२३

संबंधेऽपि असंबंधाभिधानात् असंबंधातिशयोक्तिः ।

३–मितं क्षितिम्ना सुतरां मुनेर्वपुर्विसारिभिः सौधमिवाथ लम्भयन् ।
द्विजावलिव्याजनिशाकरांशुभिः शुचिस्मिता वाचमवोचदच्युतः ॥१-२५

असंबंधेऽपि संबंधाभिधानात् संबंधरूपातिशयोक्तिः सा चोपमागर्भा ।

४–जगत्यपर्याप्तसहस्रभानुना न यन्नियन्तुं समभावि भानुना ।
प्रसह्य तेजोभिरसङ्ख्यतां गतैरदस्त्वया नुन्नमनुत्तमं तमः ॥ १-२७

असंबंधेऽपि संबंधाभिधानात् संबंधरूपातिशयोक्तिः ।

५–सटाच्छटाभिन्नघनेन बिभ्रता नृसिंह सैंहीमतनु तनुं त्वया ।
स मुग्धकान्तास्तनसङ्गभङ्गुरैरुरोविदार प्रतिचस्करे नखैः ॥ १-४७

सखर्वेऽपि असम्बधाभिधानात् सम्बधातिशयोक्ति ।

६–तिरस्कृतस्तस्य जनाभिभाविना मुहुर्महिम्ना महसा महीयसाम् ।
बभार बाष्पैर्द्विगुणीकृत तनुस्तनूनपाद्धूमवितानमाधिजैः ॥ १-६२

धूमद्वैगुण्यासम्बधे सम्बधाभिधानादतिशयोक्ति ।

७–तपेन वर्षाः शरदा हिमागमो वसन्तलक्ष्म्या शिशिरः समेत्य च ।
प्रसूनक्लृप्तिं दधत सदर्तव पुरेऽस्य वास्तव्यकुटुम्बिता ययुः ॥ १-६६

सम्बधाभिधानादसम्बधे सम्बधरूपातिशयोक्ति ।

८–हृदयमरिवधोदयादुदूढद्रढिम दधातु पुनः पुरन्दरस्य ।
घनपुलकपुलोमजाकुचाग्रद्रुतपरिरम्भनिपीडनक्षमत्वम् ॥ १-७४

सम्बधेऽप्यसम्बन्धोक्त्या सम्बन्धेऽसम्बन्धरूपातिशयोक्ति ।

६–आश्लेषलोलुपवधूस्तनकार्कश्यसाक्षिणीम् ।
म्लापयन्नभिमानोष्णैर्वनमाला मुखानिलैः ॥ २-१७

अम्लाने म्लानसम्बन्धादतिशयोक्ति ।

१०–विरोधिवचसो मूकान्वागीशानपि कुर्वते ।
जडानप्यनुलोमार्थान्प्रवाच कृतिना गिरः ॥ २-७५

असम्बधे सम्बधातिशयोक्ति विरोधानुप्राणिता च सा ।

११–बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृतिकञ्चुकः ।
चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः ॥ २-८२

१२–अमृतं नाम यत्सन्तो मन्त्रजिह्वे षु जुह्वति ।
शोभैव मन्दरक्षुब्धक्षुभिताम्भोधिवर्णना ॥ २-१०७

अत्र असंबन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्ति ।

१३–मृणालसूत्राऽमलमन्तरेण स्थितश्चलच्चामरयोर्द्वयं स. ।
भेजेऽभितः पातुकसिद्धसिन्धोरभूतपूर्वां रुचमम्बुराशेः ॥ ३-३

सवधमूलात् असंबधे संबधरूपातिशयोक्ति. ।

१४–तमङ्गदे मन्दरकूटकोटिव्याघट्टनोत्तेजनया मणीनाम् ।
बहीयसा दीप्तिवितानकेन चकासयामासतुरुल्लसन्ती ॥ ३-६

असम्बन्धेऽपि सम्बन्धोक्त्या द्वयोरतिशयोक्त्यो. सकर ।

१५–उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयस. पतेताम् ।
तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः॥ ३-८

अत्रासम्बन्धेऽपि सभावनाया सम्बन्धकथनादतिशयोक्ति. ।

१६–प्रसाधिनस्यास्य मधुद्विषोऽभूदन्यैव लक्ष्मीरिति युक्तमेतत् ।
वपुष्यशेषेऽखिललोककान्ता सानन्यकान्ता ह्युरसीतरा तु ॥ ३-१२

लक्ष्मीरित्यभेदे भेदरूपातिशयोक्तिरलकार ।

१७–कपाटविस्तीर्णमनोरमोरःस्थलस्थितश्रीललनस्य तस्य ।
आनन्दिताशेषजना बभूव सर्वाङ्गसङ्गिन्यपरैव लक्ष्मी ॥ ३-१३

अपरैव लक्ष्मी इति अभेदे भेदरूपातिशयोक्ति ।

१८–प्राणच्छिदां दैत्यपतेर्नखानामुपेयुषां भूषणतां क्षतेन ।
प्रकाशकार्कश्यगुणौ दधाना. स्तनौ तरुण्यः परिवव्रुरेनम् ॥ ३-१४

अत्रासंबंधेऽपि तत्संबंधोक्त्यातिशयोक्ति ।

२६–शुभ्रं यदन्तःकरणेन वृक्षाः फलन्ति कल्पोपपदास्तदेव ।
अध्यूषुषो यामभवञ्जनस्य याः सम्पदस्ता मनसोऽप्यगम्याः ॥ ३-५९

असंबन्धेऽपि संबन्धाभिधानात् संबन्धातिशयोक्तिः ।

२७–अत्यन्तमागमिह सानुषु सन्निकृष्टाः
पश्यन्ति शान्तमलसान्द्रतरांशुजालम् ।
संपूर्णलब्धललनालपनोपमान-
मुत्सङ्गसङ्गिहरिणस्य मृगाङ्कमूर्तेः । ४-२२

असंबन्धेऽपि संबन्धाभिधानात् संबन्धातिशयोक्तिः ।

२८–बिम्बोष्ठं बहु मनुते तुरगवक्त्र-
श्चुम्बन्तं मुखमिह किन्नरं प्रियायाः ।
श्लिष्यन्तं मुहुरितरोऽपि तं निजस्त्री-
मुत्तुङ्गस्तनभरभङ्गभीरुमध्याम् ॥ ४-३८

संबन्धेऽपि असंबन्धाभिधानात् असंबन्धातिशयोक्तिः ।

२९ अनतिचिरोज्झितस्य जलदेन चिर-
स्थितबहुबुद्बुदस्य पयसोऽनुकृतिम् ।
विरलविकीर्णवज्रशकला सकला-
मिह विदधाति धौतकलधौतमही ॥ ४-४१

अत्र स्थिरबुद्बुदासंबन्धेऽपि संभावनया संबन्धोक्तेरतिशयोक्तिः ।

३०–भिन्नेषु रत्नकिरणैः किरणेष्विहेन्दो-
रुच्चावचैरुपगतेषु सहस्रसंख्याम् ।
दोषापि नूनमहिमांशुरसौ किलेति
व्याकोशकोकनदतां दधते नलिन्यः ॥ ४-४६

इह संबन्धस्यातिशयोक्तिः सा च भ्रान्तिमदनुप्राणिता ।

३६–गजकदम्बकमेचकमुच्चकैर्नभसि वीक्ष्य नवाम्बुदमम्बरे ।
अभिससार न वल्लभमङ्गना न चकमे च कमेकरसं रह ॥ ६-२६

नवाम्बुदस्योद्दीपकत्वादतिशयोक्ति सा च कार्यकारणरूपा ।

३७–इदमयुक्तमहो महदेव यद्वरतनो स्मरयत्यनिलोऽन्यदा ।
स्मृतमयोऽनसोष्मपयोधरान् सतुहिनस्तु हिनस्तु वियोगिन ॥ ६-५६

अमारके मारकत्वघोक्तेरतिशयोक्ति ।

३८–मुदमब्दभुवामपा मयूरा. सहमायन्त नदी पपाट लाभे ।
अलिना रमतालिनी शिलीन्ध्रे सह सायन्तनदीपपाटलाभे ॥ ६-७२

अत्र कार्यकारणयो सहत्वेऽक्रमातिशयोक्ति ।

३९–नखरुचिरचितेन्द्रचापलेखं ललितगतेषु गतागतं दधाना ।
मुखरितवलयं पृथौ नितम्बे भुजलतिका मुहुरस्खलत्तरुण्याः ॥ ७-४

अत्र इन्द्रचापरचनाया असम्बन्धेऽपि तत्संबधाभिधानादतिशयोक्ति ।

४०–उपवनपवनानुपातदक्षैरलिभिरलाभि यदङ्गनाजनस्य ।
परिमलविषयस्तदुन्नतानामनुगमने खलु सपदोऽग्रत स्था. ॥ ७-२७

अत्रानुगमनयोर्द्वयोरभेदाध्यवसायात् श्लेषोत्थापितातिशयोक्तिरलंकार ।

४१–अभिमुखमुपयाति मा स्म किंचित्त्वमभिदधा पटले मधुव्रतानाम् ।
मधुसुरभिमुखाब्जगन्धलब्धेरधिकमधित्वदनेन मा निपाति ॥ ७ ४१

अत्र निपाताऽसबन्धेऽपि तत्सबंधोक्तेरतिशयोक्तिरलकार ।

४२–सरजसमकरन्दनिर्भरासु प्रसवविभूतिषु भूरुहा विरक्त. ।
ध्रुवममृतपनामवाञ्छयासावधरमनु मधुपस्तवाजिहीते ॥ ७-४२

मधुपस्याधरोद्देशस्यासबंधेऽपि सबधाभिधानादतिशयोक्ति ।

४३–मृदुचरणतलाग्रदुःस्थितत्वादसहतरा कुचकुम्भयोर्भरस्य ।
उपरि निरवलम्बनं प्रियस्य न्यपतदथोच्चतरोच्चिचीषयान्या ।।७-४८

अत्र सहतरत्वमयत्वेऽपि तदभावाभिधानादतिशयोक्तिः ।

४४–मुहुरुपहसितामिवालिनादैर्वितरसि न. कलिका किमर्थमेनाम् ।
वसतिमुपगतेन धाम्नि तस्याः शठ कलिरेष महांस्त्वयाद्य दत्तः ।।७-५५

कोरककलहयोर्भेदेऽभेदरूपातिशयोक्ति ।

४५–अवचितकुसुमा विहाय वल्लीर्युवतिषु कोमलमाल्यमालिनीषु ।
पदमुपदधिरे कुलान्यलीनां न परिचयो मलिनात्मनां प्रधानम् ।७-६१

अत्र मलिनात्मना दुष्टचित्तत्वेन सहाभेदाध्यवसायादतिशयोक्ति ।

४६–अधिकमरुणिमानमुद्वहद्भिर्विकसदशीतमरीचिरश्मिजालैः ।
परिचितपरिचुम्बनाभियोगादपगतकुङ्कुमरेणुभिः कपोलैः ।। ७-६३

असम्बन्धे सम्बन्धोक्त्यातिशयोक्ति ।

४७–यान्तीनां सममसितभ्रुवां नतत्वा-
दम्भाना महति नितान्तमन्तरेऽपि ।
संसक्तैर्विपुलतया मिथो नितम्बैः
सम्बाधं बृहदपि तद्बभूव वर्त्म ।। ८-२

अत्रासम्बन्धेऽपि सम्बन्धाभिधानादतिशयोक्तिः ।

४८–गच्छन्तीरलसमवेक्ष्य विस्मयिन्य-
स्तास्तन्वीर्न विदधिरे गतानि हंसाः ।
बुद्ध्वा वा जितमपरेण काममावि-
ष्कुर्वीत स्वगुणमपत्रपः क एव ।। ८-७

असम्बन्धे सम्बन्धाभिधानात् सम्बन्धातिशयोक्ति ।

४९–मुग्धायाः स्मरललितेषु चक्रवाक्या
निःशङ्कं दयिततमेन चुम्बितायाः ।
प्राणेशानभि विदधुर्विधूतहस्ताः
सीत्कारं समुचितमुत्तरं तरुण्यः ॥ ८-१३

असम्बन्धेऽपि सम्बन्धाभिधानात् तत्सम्बन्धातिशयोक्तिः ।

५०–निर्यातो निजवसतेर्निराशिरे य-
द्रागेण श्रियमरविन्दतः कराग्रैः ।
स्वच्छत्वं नियतमनेन निम्नगस्या
सापत्न्यं क्षितिमुनविद्विषो महिम्नः ॥ ८-१५

अत्र श्रीशब्देनाभेदाध्यवसायेनातिशयोक्तिः श्लेषप्रतिभोत्थापिता च सा ।

५१–संक्षोभं पयसि मुहुर्महेभकुम्भश्रीभाजा कुचयुगलेन नीयमाने ।
विश्लेषं युगमगमद्रथाङ्गनाम्नोरुद्वृत्तः क इव सुखावहः परेषाम् ।८-१८

असम्बन्धेऽपि सम्बन्धादतिशयोक्तिः सा च श्लेषमूला ।

५२–मानाभेः सरसि नतभ्रुवावगाढे
चापल्यादथ पयसस्तरङ्गहस्तैः ।
उच्छ्राय स्तनयुगमध्यरोहि लब्ध-
स्पर्शानां भवति कुतोऽथवा व्यवस्था ॥ ८-२२

अत्र चापल्यादभेदाध्यवसानादतिशयोक्तिः ।

५३–गाम्भीर्यं दधदपि रत्नुमङ्गनाभिः
सक्षोभं जघनविघट्टनेन नीतः
अम्भोधिर्विकसितवारिजाननोऽसौ
मर्यादां सपदि विलङ्घयाबभूव ॥ ८-२६

समासोक्त्यनुप्राणिता प्रतीयमानाभेदाध्यवसायमूलातिशयोक्तिः ।

५४–आदातुं दयितमिवावगाढमारा-
दूर्मीणां ततिभिरभिप्रसार्यमाणः ।
कस्याश्चिद्विततचलच्छिखाङ्गुलीको
लक्ष्मीवान् सरसि रराज केशहस्तः ॥ ८-२७

रूपकानुप्राणिता श्लेषमूलाप्रतीयमानादभेदरूपातिशयोक्तिः ।

५५–उन्निद्रप्रियकमनोज्ञ रमण्या
संरेजे सरसि वपुः प्रकाशमेव ।
युक्तानां विमलतया तिरस्क्रियायै
नाक्रामन्नपि हि भवत्यलं जलौघः ॥ ८-२८

श्लेषमूलार्थान्तरन्यासानुप्राणिताभेदेऽभेदरूपातिशयोक्तिः ।

५६–उत्तुङ्गादनिलचलांशुकास्तटान्ता-
च्चेतोभिः सह भयदर्शिनां प्रियाणाम् ।
श्रोणीभिर्गुरुभिरतूर्णमुत्पतन्त्य-
स्तोयेषु द्रुतमरमङ्गना निपेतुः ॥ ८-३१

कार्यकारणयोः पौर्वापर्यविध्वंसरूपातिशयोक्तिः ।

५७–दुर्वद्भिर्नु स्मरविमुज्ज्वलामजस्रं
यैस्तोयैरसिचत वल्लभां विलासी ।
तैरेव प्रतियुवतेरकारि दूरा-
त्कालुष्यं शशधरदीधितिच्छटाच्छैः ॥ ८-३२

वैवर्ण्यकालुष्ययोरभेदाध्यवसायादतिशयोक्तिः ।

५८–उद्वोढुं कनकविभूषणान्यशक्तः
सध्रीचा कलयितपद्मनालसूत्रः ।

आरुढप्रतिवनिताकटाक्षभार
साधीयो गुरुरभवद्भुजस्तरुण्या ८-४४

कनकविभूषणान्यशक्त गुरु साधीय इति भेदेऽभेदरूपातिशयोक्ति ।

५९-आबद्धप्रचुरपरार्ध्यकिंकिणीको
रामाणामनवरतोदगाहभाजाम् ।
नारावं व्यतनुत मेखलाकलापः
कस्मिन्वा सजलगुणे गिरा पटुत्वम् ॥ ८-४५

भेदेऽभेदरूपातिशयोक्ति सा च श्लेषानुप्राणिता ।

६०-सौगन्ध्यं दधदपि काममङ्गनाना
दूरत्वादगतमहमानननोपमानम् ।
नेदीयो जितमिति लज्जयेव तासा-
मालोले पयसि महोत्पलं ममज्ज ॥ ८-४८

आलोले पयसि महोत्पलं ममज्जेति श्लेषमूलातिशयोक्तिरत्र ।

६१-स्नान्तीना बृहदमलोदबिन्दुचित्रौ
रेजाते रुचिरदृशामुरोजकुम्भौ ।
हाराणा मणिभिरुपाश्रितौ समन्ता-
दुत्सूत्रैर्गुणवदुपघ्नकाम्ययेव ॥ ८-५३

श्लेषानुप्राणितातिशयोक्ति, सा चोत्प्रेक्षोपजीविता ।

६२-आरुढ पतित इति स्वसम्भवोऽपि
स्वच्छाना परिहरणीयतामुपैति ।
कर्णेभ्यश्च्युतमसितोत्पलं वधूना
वीचीभिस्तटमनु यन्निरासमुराप ॥ ८ ५४

श्लेषमूलातिशयोक्ति सा चार्थान्तरन्यासानुप्राणिता ।

६३–वक्षोभ्यो घनमनुलेपनं यदूना-
मुत्तानहस्त बारि नूधंजेन्य ।
नेत्राणां मदरुचिरक्ततेव तस्थौ
चक्षुष्य खलु महता परैरलङ्घ्य ॥ ८-५७

सम्बन्धेऽसम्बन्धाभिधानात् सम्बन्धातिशयोक्तिः ।

६४–श्री वाह्य न खलु जनैनिरासि रागो
दृश्चिन्ते स तु तदवस्य एव तेषाम् ।
धीराणां व्रजति हि सर्वे एव नान्त
पातिस्वादभिभवनीयता परस्य ॥ ८-५८

सम्बन्धेऽसम्बन्धाभिधानात् सम्बन्धातिशयोक्तिः सा च श्लेषमूला।

६५–श्लक्ष्णं यत्परिहितमेतयो किलान्त-
र्धानार्थं तदुदनमेवसक्तमूर्वोः ।
नारीणां विमलतरो समुल्लसन्त्या
भासान्तर्दधतुरुरू दुकूलमेव ॥ ८-६५

विषमानुप्राणितासम्बन्धे सम्बन्धरूपातिशयोक्तिरत्र ।

६६–नित्य. श्रियः सततमेतदिति प्रथितं यदेव जलजन्म तया ।
दिवसात्ययात्तदपि मुक्तमहो चपलाजनं प्रति न चोद्यमद. ॥ ६-१६

भेदेऽभेदरूपातिशयोक्ति श्लेषमूला च सा ।

६७–अनुलेपनानि कुसुमान्यबला: कृतमन्यवः पतिषु दीपशिखाः ।
समयेन तेन चिरसुप्तमनोभवबोधनं सममबोधिषत ॥ ६-२४

अत्र श्लेषमूलाभेदाध्यवसायरूपातिशयोक्तिः ।

६८–प्रमलात्मसु प्रतिफलप्रभितस्तरुणीकपोलफलकेषु मुहुः ।
विभरार सान्द्रतरमिन्दुरुचामधिकावभासितदिशां निकरः ॥ ६-३७

असम्बन्धे सम्बन्धोक्तिरूपाऽतिशयोक्तिः ।

६९–भवनोदरेषु परिमन्दतया शयितोऽलसः स्फटिकपट्टिरुच. ।
प्रवनम्य जालकमुखोपगतानुदनिष्ठदिन्दुकिरणान्मदनः ॥ ६-३६

अभेदाध्यवसायमूलातिशयोक्तिः सा चोत्प्रेक्षानुप्राणिता ।

७०–युगपद्विकासमुदयाद्गमिते शशिन. शिलीमुखगणोऽलभत ।
द्रुतमेत्य पुष्पधनुषो धनुषः कुमुदेऽङ्गनामनसि चावसरम् ॥ ६-४१

तुल्ययोगितामूला श्लिष्टपदोपात्तातिशयोक्तिः ।

७१–न मनोरमास्वपि विशेषविदा निरवेशि योग्यमिदमेतदिति ।
गृहमेष्यति प्रियतमे मुहुरा वसनाङ्गरागसुमनस्सु मन. ॥ ६-५०

निश्चयसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ।

७२–उपताप्यमानमनघूष्णमभि श्वसितैः सितेतरसरोजदृश. ।
द्रवतां न नेतुमधरं क्षमते नवनागवल्लिदलरागरस. ॥ ६-६५

अत्र द्रवत्वसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ।

७३–अनुदेहमागतवत. प्रतिमां परिणायकस्य गुरुमुद्वहता ।
मुकुरेण वेपथुभृतोऽतिभरात् कथमप्यपाति न वधूकरतः ॥ ६-७३

अत्र वधूकरस्य भाराऽसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ।

७४–सुहृशः सरसव्यलीकतप्तस्तरसाश्लिष्टवतः सयौवनोष्मा ।
कथमप्यभवत्स्मरानलोष्ण. स्तनभारो न नखपचः प्रियस्य ॥ ६-८५

तादृशोष्ण्यसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ।

७५–दयतमुरोजद्वयमुरंगीनल भुवो गतेव स्वयमुर्वंगी तत्क्षम् ।
ग्रभौ मुखेनाग्रनिमेन काचन श्रियाधिका ता प्रति मनमा च न ।६ ८

मवाऽसंबधाभिधानात् सत्यातिशयोक्ति ।

७६–बिम्बित मृतपतिम् ति जानन् भाजने जलजमित्यबलायाः ।
घ्रानुमपि पतति भ्रमर स्म भ्रान्तिभाजि भवति क्व विवेकः ।।१०।

गमय ऽसंबधाभिधानात् सत्संघरूपातिशयोक्ति ।

७७–दत्तमिष्टतमया मधु परयुर्वाडमाप पिवतो रमवत्ताम् ।
यत्मुवर्णमुकुटांशुभिरामोच्च्वेननाविरहितैरपि पीतम् ।। १० ६

क्रियाभेदाध्यवसायेन दनेषमूलातिशयोक्ति सा चोत्प्रेक्षानुप्राणिता

७८–रस्यचित्तमदन मदनीयप्रेयसीवदनपानपरस्य ।
स्वादित मकृदिवासव एव प्रत्युत क्षणविदगपदेऽभूत् ।। १०·१०

मधरपानस्योपदंशत्वमत्रानेऽप्यसंबध इति अतिशयोक्ति ।

७९–मद्यमन्दविगलत्त्रपमीपच्चक्षुरुन्मिषितपक्ष्म दयत्या ।
वीक्ष्यते स्म शनकैर्नवबध्वा कामिनो मुखमधोमुखयैव ।। १० ११

मदमानाभ्यां त्रपैव बलीयसीति संबधातिशयोक्ति ।

८०–छादित कथमपि त्रपयान्तर्यं प्रियं प्रति चिराय रमम्या ।
वारुणीमदविशङ्कमयाविष्कृतोऽभवदसाविव राग ।। १०·१२

अत्र श्लेषप्रतिभोत्यापिताऽभेदाध्यवसायमूलातिशयोक्ति ।

८१–मानभङ्गपटुना सुरतच्छा तन्वता प्रथयता दृशि रागम् ।
लेभिरे सपदि भावयतान्तर्योषित प्रणयिनेव मदन ।। १०·१३

रागमिति श्लेषमूलातिशयोक्ति सा चोपमानुप्राणिता ।

८२–दीपितस्मरमुरस्युपपीड वल्लभे घनमभिष्वजमाने ।
वक्रता न ययतु कुचकुम्भौ सुभ्रुव कठिनतातिशयेन ॥ १०-४७

अत्र सम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्ति ।

८३–न स्म माति वपुष. प्रमदानामन्तरिद्धतमसगमजन्मा ।
यद्वहुर्वहिरवाप्य विकासं व्यानशे तनुरुहाण्यपि हर्षः ॥ १०-५०

श्लेषमूलाऽभेदाध्यवसायातिशयोक्ति सा चोत्प्रेक्षानुप्राणिता ।

८४–कामिनामसकलानि विभुग्नं स्वेदवारिमृदुभि करजाग्रै ।
अक्रियन्त कठिनेषु कथचित्कामिनी कुचतटेषु पदानि ॥ १०-५७

अत्र कुचानामीदृक्काठिन्यासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ।

८५–आमृशद्भिरभितो वलिवीचीर्लोलमानवितताङ्गुलिहस्तै ।
सुभ्रुवामनुभवात्प्रतिपेदे मुष्टिमेयमिति मध्यमभीष्टै ॥ १०-५६

अमुष्टिमेयस्य मुष्टिमेयोक्तेः सम्बन्धातिशयोक्ति. ।

८६–ग्रन्थिमुद्ग्रथयितु हृदयेशे वासस स्पृशति मानधनायाः ।
भ्रूयुगेन सपदि प्रतिपेदे रोमभिश्च सममेव विभेद. ॥ १०-६३

श्लेषप्रतिभोत्थापिताऽभेदाध्यवसायमूलातिशयोक्ति. ।

८७–आयताङ्गुलिरभूदतिरिक्त सुभ्रुवा कृशिमशालिनि मध्ये ।
श्रोणिषु प्रियकर पृथुलासु स्पर्शमाप सकलेन तलेन ॥ १०-६५

सम्बन्धेऽसम्बन्धाभिधानात् सम्बन्धातिशयोक्ति ।

८८–कान्तया सपदि कोऽप्युपगूढ. प्रौढपाणिरपनेतुमियेष ।
संहतस्तनतिरस्कृतदृष्टिर्भ्रष्टमेव न दुकूलमपश्यत् ॥ १०-७३

असम्बन्धेऽपि सम्बन्धरूपातिशयोक्तिः सा च काव्यलिंगानुप्राणिता ।

८९–विपुलतरनितम्बाभोगरुद्धे रमण्या
शयितुमनधिगच्छञ्जीवितेशोऽवकाशम् ।
रतिपरिचयनश्यन्नैद्रतन्द्रः कथंचि-
द्गमयति शयनीये शर्वरीं किं करोतु ॥ ११-५

अत्रासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिरलंकारः काव्यलिंगमूला च सः।

९०–मदरुचिमरुणेनोद्गच्छता लम्भितस्य
त्यजत इव चिराय स्थायिनीमाशु लज्जाम् ।
वसनमिव मुखस्य स्रंसते संप्रतीद
सितकरकरजालं वासवाशायुवत्याः ॥ ११-१६

अत्र मुखस्येति प्रागभागवदनयोरभेदाध्यवसायात् श्लेषमूलातिशयोक्तिः।

९१–विलुलितकमलौघः कीर्णवल्लीवितानः
प्रतिवनमवधूताशेषशाखिप्रसूनः ।
क्वचिदयमनवस्थः स्यास्नुतामेति वायु-
र्वधुकुसुमविमर्दोद्गन्धिवेश्मान्तरेषु ॥ ११-२८

अत्र वायोरस्थायित्वेऽपि स्थायित्वसंबंधोक्तेरतिशयोक्तिः ।

९२–उदयशिखरिशृङ्गप्राङ्गणेष्वेष रिङ्खन्
सकमलमुखहासं वीक्षितः पद्मिनीभिः ।
विततमृदुकराग्रः शब्दयन्त्या वयोभिः
परिपतति दिवोऽङ्के हेलया बालसूर्यः ॥ ११-४७

अत्रासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ।

९३–प्रतिफलति करौघे सम्मुखावस्थितायाः
रजतकटकभित्तौ सान्द्रचन्द्रांशुगौर्याम् ।

वहिरभिहतमद्रेः सहतं कदरान्त-
गतमपि तिमिरौघ घर्मभानुर्भिनत्ति ॥ ११-५८

अत्र करौघस्यान्त सम्बन्धाभावेऽपि सम्बन्धोक्तेरतिशयोक्ति ।

६४—भेरीभिराक्रुष्टमहागुहामुखो ध्वजांशुकैस्तर्जितकन्दलीवन ।
उत्तुङ्गमातङ्गजितालघूपलो बलैः स पश्चात्क्रियते स्म भूधर ॥ १२-२७

अत्र प्रतीयमानाभेदाध्यवसायात् श्लेषमूलातिशयोक्ति ।

६५—तैर्वैजयन्तीवनराजिराजिभिर्गिरिप्रतिच्छन्दमहामतङ्गजैः ।
बह्वपः प्रसर्पज्जनतानदीनतैर्भुवो बलैरन्तरयावभूविरे ॥ १२-२६

श्लेषमूलाभेदातिशयोक्ति सा च काव्यलिंगानुप्राणिता ।

६६—अह्नानतीव क्वचिदुद्धतिश्रित क्वचित्प्रकाशानथ गह्वरानपि ।
साम्यादपेतानिति वाहिनी हरेस्तदातिचक्राम गिरीन्गुरूनपि ॥१२-५६

गुरूनिति वाच्यप्रतीयमानयोरभेदाध्यवसायात् श्लेषमूलातिशयोक्तिः ।

६७—स व्यासवत्या परितोऽप्ययान्यपि स्वसेनया सर्वपथीनया तया ।
अम्भोभिरल्लङ्घिततुङ्गरोधसः प्रतीपनाम्नीः कुरुते स्म निम्नगा ॥१२-५७

अत्र निम्नगाना प्रतीपनामाऽसम्बधेऽपि सम्बन्धोक्तेरतिशयोक्ति ।

६८—यावद्व्यगाहन्त न दन्तिनां घटास्तुरंगमैस्तावदुदीरित खुरैः ।
क्षिप्तं समीरैः सरितां पुरः पतज्जलान्यनैपीद्रज एव पङ्कताम् ।१२-५८

अत्र सरितां पंकत्वाऽसंबन्धेऽपि सम्बन्धातिशयोक्ति ।

६६—रन्तुं क्षतोत्तुङ्गनितम्बभूमयो मुहुर्व्रजन्त प्रमद मदोद्धताः ।
पङ्कं करायाकृतनैवलांशुका समुद्रगाणामुदपादयन्निभाः ॥ १२-५६

स्त्रीपंकयोरभेदाध्यवसायादिति श्लेषमूलातिशयोक्ति ।

१००–हयारोहैरिव परिपूरिताम्भसः समस्थलीकृत्य पुरातनीर्नदीः ।
कूलङ्कषौघाः सरितस्तथापगाः प्रवर्तयामासुरिमा मदाम्बुभिः ॥१२-६०

अत्रासम्बन्धेऽपि सम्बन्धोक्तेः सम्बन्धातिशयोक्तिः ।

१०१–ययं स्वन्दीतवधूमुखद्युतो गता न हर्षं श्रियमातपत्रजाम् ।
दूरेऽभवन्भोजबलस्य गच्छतः शैलोपमातीतगजस्य निम्नगाः ॥१२-६१

अभेदाध्यवसायेनैव श्लेषमूलातिशयोक्तिः ।

१०२–मायामिवर्द्धिः करिणां घटातरैश्च कृताट्टालकपङ्क्तिरञ्चकैः ।
दूष्यैर्विनोदप्रगृहाणि सा चमूरतीत्य भूयांसि पुराण्यवर्तत ॥ १२-६५

अभेदाध्यवसायेन श्लेषमूलातिशयोक्तिः ।

१०३–न ममौ कपाटतटविस्तृततनौ मुरवैरिवक्षसि क्षमाभुजः ।
भुजयोस्तथापि युगलेन दीर्घयोर्विकटीकृतेन परितोऽभिषस्वजे ॥१३-१०

अत्र सम्बन्धेऽसम्बन्धरूपातिशयोक्तिः ।

१०४–रथमास्थितस्य च पुराभिवर्तिनस्त्रिसृणां पुरामिव रिपोर्मुरद्विषः ।
अथ धर्ममूर्तिरनुरागभावितः स्वयमादित प्रवयणं प्रजापतिः ॥१३-१९

प्रजापतिरिति श्लेषमूलाभेदाध्यवसायादतिशयोक्तिः ।

१०५–नलिनान्तिकोपहितपल्लवश्रिया व्यवधाय चारु मुखमेकपाणिना ।
स्फुरदङ्गुलीविवरनिःसृतोल्लसद्दशनप्रभाङ्कुरमजृम्भतापरा ॥१३-४३

अत्र नलिनपल्लवयोरसम्बन्धेऽपि सम्भावनया सम्बन्धाभिधानादतिशयोक्तिः ।

१०६–जनसंमर्देन सुहृदः शरीरकैः स्वगृहान्प्रति प्रतिययुः शनैः शनैः ।
अलघुप्रसारितविलोचनाञ्जलिद्रुतपीतमाधवरसौघनिर्भरैः ॥१३-२८

माधवरसेनेति श्लेषमूलातिशयोक्तिः ।

१०७-तदलक्ष्यरत्नमयकुड्यमादरादभिघातरीत इत इत्यथो नृपे ।
धवलाश्मरश्मिपटलाविभावितप्रतिहारमाविशदसौ सदः शनैः ।१३-६२

अत्र कुड्यप्रतीहारयोरलक्ष्यत्वासंबंधेऽपि तत्संबंधोक्तेरतिशयोक्तिः ।

१०८-नवहाटकेष्टकचितं ददर्श स क्षितिपस्य पस्त्यमथ तत्र ससदि ।
गगनस्पृशां मणिरुचा चयेन यत्सदनान्युदस्मयत नाकिनामपि ।१३-६३

अत्र नृपसदनस्य नाकिसदनाद्याधिक्यासंबंधेऽपि तत्संबंधोक्तेरतिशयोक्तिः ।

१०९-उदयाद्रिमूर्ध्नि युगपच्चकासतोदिननाथपूर्णशशिनोरसंभवाम् ।
रुचिमासने रुचिरधाम्नि बिभ्रतावलघुन्यथ न्यपदतां नृपाच्युतौ।।१३-६४

अत्र संभावनया अर्कपूर्णेन्दुशोभासंबंधोक्तेरसंबंधे संबंधरूपातिशयोक्तिः ।

११०-सा विभूतिरनुभावसम्पदा भूयसी तव यदायतायति ।
एतदूढगुरुभार भारतं वर्षमद्य मम वर्तते वशे ।। १४-५

भगवदनुभावसंपदं विना संबंधेऽप्यसंबंधोक्तेरतिशयोक्तिः ।

१-पूर्वमङ्ग जुहुधि त्वमेव वा स्नातवत्यवभृथे ततस्त्वयि ।
सोमपायिनी भविष्यते मया वाञ्छितोत्तमवितानयाजिना ।। १४-१०

अत्रासंबंधे तत्संबंधोक्तेरतिशयोक्तिः ।

२-किं विधेयमनया विधीयतां त्वत्प्रसादजितयार्थसंपदा ।
शाधि शासक जगत्त्रयस्य मामाश्रवोऽस्मि भवतः सहानुजः ।।१४-११

अत्राश्रवस्याश्रवत्वसंबंधोक्तेरतिशयोक्तिः ।

३-शासनेऽपि गुरुणि व्यवस्थितं कृत्यवस्तुषु नियुङ्क्ष्व कामतः ।
त्वत्प्रयोजनधनं धनंजयादन्य एष इति मां च मावगाः ।। १४-१५

अत्र भेदाभेदरूपातिशयोक्तिः सा च काव्यलिंगानुप्राणिता ।

११४–बद्धदर्भमयकाञ्चिदामया वीक्षितानि यजमानजायया ।
शुष्मणि प्रणयनादिसंस्कृते तैर्हवींषि जुहवांबभूविरे ॥ १४-२८

अत्र प्रकृतस्याप्रकृतेनाध्यवसानाद् भेदेऽभेदरूपातिशयोक्तिः ।

११५–निर्जिताखिलमहार्णवौषधिस्यन्दसारममृतं ववल्गिरे ।
नाकिन कथमपि प्रतीक्षितुं हूयमानमनले विषेहिरे ॥ १४-२९

अत्र हविषोऽमृतमित्यभेदोक्त्या भेदरूपातिशयोक्तिः ।

११६–तत्र नित्यविहितोपहूतिषु प्रोषितेषु पतिषु द्युयोषिताम् ।
गुम्फिता शिरसि वेण्योऽभवन्न प्रफुल्लसुरपादपस्रजः ॥ १४-३०

अत्र संबंधेऽप्यसंबन्धोक्ते असंबन्धरूपातिशयोक्तिः ।

११७–प्राशुराशु हवनीयमत्र यत्तेन दीर्घममरत्वमप्यगु ।
उद्धतानधिकमेधितौजसो दानवाश्च विबुधा विजिग्यिरे ॥ १४-३१

अत्रासंबन्धेऽपि संबन्धोक्तेरतिशयोक्तिः सा च काव्यलिङ्गानुप्राणिता ।

११८–मृग्यमाणमपि यद्दुरासद भूरिभारमुपनीय तत्स्वयम् ।
आसनावसरकाङ्क्षिणो बहिस्तस्थु रत्नमुपदीकृतं नृपाः ॥ १४-३२

अत्रासंबन्धे संबन्धाभिधानात् संबन्धरूपातिशयोक्तिः ।

११९–एक एव वसु यद्ददौ नृपस्तत्समाप्तमतवर्धत क्रतौ ।
स्वर्गशालिनि ततःसुते ययु सर्वपार्थिवधनान्यपि क्षयम् ॥ १४-४०

अत्रासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिः ।

१२०–रेणुकातनयतामुपागतः शातितप्रचुरपत्रमहृति ।
स्थूलभूरिभुजशाखमुज्झितच्छायमर्जुनवनं व्यधादयम् ॥ १४-८०

अत्र श्लेषप्रतिभोत्थापिताऽभेदातिशयोक्तिः सा च रूपकानुप्राणिता ।

१२१–छलयन्प्रजास्त्वमनृतेन कपटपटुरैन्द्रजालिक ।
प्रीतिमनुभवसि नग्नजित सुतयेप्टसत्य इति सप्रतीयसे ॥ १५-२५

अत्र हरे. सत्यसंबंधेऽपि तत्संबंधोक्ते संबंधरूपातिशयोक्तिः ।

१२२–धृतवान्न चक्रमरिचक्रभयचकितमाहवे निजम् ।
चक्रधर इति रथाङ्गमद सतत बिभर्षि भुवनेषु रूढये ॥ १५-२६

अत्र चक्रधारणसंबंधेऽप्यसंबंधोक्तेरतिशयोक्ति ।

१२३–जगति श्रिया विरहितोपि यदुदधिसुतामुपायथाः ।
ज्ञातिजनजनितनापदा स्वमत श्रियः पतिरिति प्रथामगा ॥ १५-२७

अत्र जगति श्रियःपतित्वसंबंधेऽप्यसंबंधोक्तेरतिशयोक्तिः ।

१२४–अभिमनु सयति कदाचिदविहितपराक्रमोऽपि यत् ।
व्योम्नि कथमपि चकर्थ पद व्यपदिश्यसे जगति विक्रमीत्यत. ॥१५-२८

अत्र पराक्रमसंबंधेऽप्यसंबंधोक्तेरतिशयोक्तिः ।

१२५–पृथिवी बिभर्थ यदि पूर्वमिदमपि गुणाय वर्तते ।
भूमिभृदिति परहारितभूस्त्वमुदाह्रियस्व कथमन्यथा जनैः ॥१५-२९

अत्र भूधरणसंबंधेऽप्यसंबंधोक्तेरतिशयोक्तिः ।

१२६–तव धन्यतेयमपि सर्वनृपतिकलितोऽपि यत्क्षणम् ।
क्ष्मान्तकरतलधृताचलकः पृथिवीतले तुलितभूभृदुच्यसे ॥ १५-३०

अत्र भूभृदिति श्लेषमूलाऽभेदाध्यवसायोत्थापितातिशयोक्तिः ।

१२७–कुपिताकृति प्रथममेव हसितमशनैरसूचयन् ।
क्रुद्धमशनिदलिताद्रितटध्वनि दन्तवक्रमरिचक्रभीषणम् ॥ १५-५२

१२८–चरणेन हन्ति सुबल- स्म शिथिलितमहीध्रबन्धनाम् ।
तीरतरलजनराशिजनामवभुग्नभोगिफलमण्डला भुवम् ॥ १५-४४

अत्र पादाघाताद् भुव कम्पासबधेऽपितत्सबधोक्तेरतिशयोक्ति. ।

१२९–सहसा सम्भ्रमविलोलनवलजनतानमाकुलम् ।
स्थानमगमदथ तत्पतितस्खलितोडुमण्डलनभ स्थलोपमाम् ॥ १५-७४

अत्रोडुमण्डलस्य चलनासबधेऽपि सभावनया तत्सबधोक्तेरतिशयोक्ति. ।

१३०–परिमोहिणा परिजनेन कथमपि चिरादुपाहृतम् ।
वर्म करतलयुगेन महन्ननुचूर्णयंपमपिपद्मया पर ॥ १५-७६

अत्र वर्मण पेषणाऽसबधेऽपि तत्सबधोक्तेरतिशयोक्तिः ।

१३१–विपुलाऽचलस्थलघनेन जिगमिपुभिरङ्गना प्रियैः ।
पीनकुचतटनिपीडदलद्वरवारबाणमुरमालिलिङ्गिरे ॥ १५-८४

अत्र वारबाणनो दलनासबधेऽपि तत्सबधोक्तेरतिशयोक्ति ।

१३२–प्रतनूल्लसिनाऽचिरद्युत शरदं प्राप्य विखण्डितायुधा. ।
दधतेऽरिभिरस्य तुल्यता यदि नामाम्बुभृतः पयोमुचः ॥ १६-६१

अत्र ग्रामारामबधेऽपि सभावनया तत्सबंधोक्तेनतिशयोक्ति ।

१३३–समगद निकामकर्कशं क्षणमाकृष्टमुपैति यस्य च ।
धनुषा समसाशु विद्विषा कुलमाशङ्कितभङ्गमाननिम् ॥ १६-६३

अत्र कार्यकारणयो पौर्वापर्यविपर्ययनिमित्तस्यातिशयोक्ति ।

१३४–भृतभूतिरहीनभोगभाग्विजिनाऽनेकपुरोऽपि विद्विषाम् ।
रुचिमिन्दुदले करोत्यजः परिपूर्णेन्दुरुचिर्महीपतिः ॥ १६-७१

स्थ्योरभेदाध्यवसायादिति स्तेयमूलाऽभेदातिशयोक्तिः ।

१३५—लोकालोकव्याहृत घर्मरश्मे शालीन वा धाम नाल प्रसर्तुम् ।
लोकस्याग्रे पश्यतो धृष्टमाशु क्रामत्युच्चैर्भूभृतो यस्य तेज ॥ १६-८

लोकालोकयो भूभृतामभेदाध्यवसायान् श्लेषमूलाऽतिशयोक्ति ।

१३६—परस्पर परिकुपितस्य पिपतः क्षतोर्मिकाकनकपरागपङ्किलम् ।
करद्वयं सपदि मुखस्वनो निर्जरनाग्लस्तिभिरधाव्यताम्बुभि ।।१

अत्रा संबधेऽपि सबधोक्तेरतिशयोक्ति ।

१३७—ससंभ्रम चरणतलाभिताडनस्फुटन्महीविवरविनीर्गावर्तमभि ।
रवै करैरनुमितताविनोरग प्रकाशना गिरिरनयद्रसातलम् ॥१३-

अत्रासबधेऽपि सबधोक्तेरतिशयोक्ति ।

१३८—जडीकृतश्रवणपथे दिवौकसा चमूरवे विशति सुराद्रिकदरा ।
अनर्थकैर्जनि विदग्धकामिनीरतान्तरक्वणितविलासकौशलै:॥१७-

क्वणितानामानर्थक्यासबंधेऽपि तत्सबधोक्तेरतिशयोक्ति: ।

१३९—प्रयोच्चकैर्जरठकपोतकधरातनूरुहप्रकरविपाण्डुरद्युति ।
बलैश्चलच्चरणविधूतमुच्चकैर्घनावलीरुदचरत क्षमारज ॥ १७-४

अत्र भूरेणोर्घनमण्डलाक्रमणासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्ति

१४०—निरीक्षितु वियति समेत्य कौतुकात्पराक्रम समरमुखे महीभृता
रजस्तताविनिमिषलोचनोत्पलव्यथाकृति त्रिदशगणे पलाय्यत॥१७-

अत्र लोचनोत्पलाना व्यथाऽसम्बन्धाक्तेरतिशयोक्ति ।

१४१—वियङ्गिणि प्रतिपदमापिबत्यपो हताचिरद्युतिनि समीरलक्ष्मणि
शनै: शनैरुपचितपङ्कभारिका पयोमुच: प्रथयुरपेतवृष्टय ॥ १७-

अत्र पयोमुचा पंकभरणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्ति ।

१४२—नभोनदीव्यतिकरधौतमूर्तिभिर्वियद्गतैरनतिगतानि सेनिरे ।
चलच्चमूतुरगखुराहतोद्धतन्महीरजःस्नपनसुखानि दिग्गजैः ॥१७-६४

अत्र दिग्गजानां रजःस्नपनासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ।

१४३—समस्थलीकृतविवरेण पूरिता महीभृतां बलरजसा महागुहा ।
रहस्त्रपाविधुरवधूरतार्थिनां नभःसदामुपकरणीयतां ययुः ॥१७-६६

अत्रोपकारकत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ।

१४४—यावच्चक्रे नाञ्जनं बोधनाय व्युत्थानज्ञो हस्तिचारी मदस्य ।
तेनास्वादाद्दन्तिनामात्मनैव स्थूलास्तावत्प्रावहन्दानकुल्याः ॥ १८-२८

अञ्जनात्प्राक् दानसम्बन्धोक्तेरतिशयोक्तिः ।

१४५—तूर्णं यावन्नापनिन्ये निषादी वासश्चक्षुर्वारणं वारणस्य ।
तावत्पूर्णैरन्यनागाधिरूढः काण्डव्रातामेकपातैरसीव्यत् ॥ १८-२९

अत्र चक्षुषः सीवनासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ।

१४६—मास्यद्दृष्टेराच्छदं चाश्रमन्तो यन्ता यावत् प्रत्यनीकं द्विपस्य ।
मग्नस्योच्चैर्बृंहभारेण गह्वोरावव्राते वीक्षणे च क्षणेन ॥ १८-३०

अत्र कार्यकारणयोः पौर्वापर्यविपर्ययादत्यन्तातिशयोक्तिः ।

१४७—भग्नेऽप्याभे स्वे पराबद्धदेह योद्धा सार्धं क्रीडया मुष्टिनेतुः ।
साह यन्तुः समदैनानुबन्धी दूनोऽभीक्ष्णं वारणः प्रत्यगोषि ॥१८-३६

अत्र कारणयोस्तत्पौर्वापर्यविपर्ययरूपातिशयोक्तिः ।

१४८—दुर्गे क्षिप्तक्षिप्रचक्रेण कृत्तं सत्तो हस्तं हस्तिराजः स्वमेव ।
भीमं भूमौ लोलमानं सरोषः पादेनासृक्पङ्कपेषं पिपेष ॥ १८-४५

अत्र पेषणासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ।

१४६–आपस्काराल्लूनगात्रस्य भूमिं निःसाधारं गच्छतोऽवाङ्मुखस्य ।
लब्धायाम दन्तयोर्युग्ममेव स्वं नागस्य प्रापदुत्तम्भनत्वम् ॥ १८-४६

अत्र दन्तयोरुत्तंम्भनमिति संबंधेऽप्यसंबंधोक्तेरतिशयोक्ति ।

१५०–लब्धस्पर्शं भूव्यधादग्रपेन स्थित्वा किंचिद्दन्तयोरन्तराले ।
ऊर्ध्वर्धासिच्छिन्नदन्तप्रवेष्ट जित्वोत्तस्थे नागमन्येन सद्य ॥१८-४७

अत्र तयोत्थानाद्यसबधेऽपि सबधोक्तेरतिशयोक्ति ।

१५१–कश्चिद् दूरादायतेन द्रढीय प्रासप्रोतप्रोतसान्त क्षतेन ।
हस्ताग्रेण प्राप्यप्रतोऽभूदानैश्वर्यं वारणस्य ग्रहीतुम् ॥ १८-४६

अत्रानैश्वर्यसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्ति ।

१५२–कश्चिन्मूर्छामित्य गाढप्रहार सिक्तः शीतैः शीकरैर्वारणस्य ।
उच्छ्वास प्रास्थिता त जिघृक्षुर्व्यर्थाकूना नाकनारी मुमूर्च्छं ।१८-५८

नाकनारी मुमूर्छ इत्यसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्ति ।

१५३–वृत्त युद्धे शूरमाश्लिष्य काचिद्रन्तु तूर्णं मेरुकुञ्जं जगाम ।
त्यक्त्वा नाम्नो देहमेनि स्म यावल्लत्नी सद्यस्तद्वियोगासमर्था ।१८-६०

अत्र मेरुकुञ्जासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्ति ।

१५४–त्यक्तप्राणा संयुगे हस्तिनीस्था वीक्ष्य प्रेम्णा तत्क्षणादुद्गतासु ।
प्राप्याखण्ड देवभूय सतीत्त्वादाशिश्लेष स्वंव काचित्पुरध्री ॥ १८-६१

अत्र कार्यकारणपौर्वापर्यविपर्ययाच्चपलातिशयोक्ति ।

१५५–भिन्नोरस्कौ शत्रुणाकृष्य दूरादासन्नत्वात्कौचिदेकेषुणैव ।
अन्योन्यावष्टम्भसामर्थ्ययोगादूर्ध्वविवं स्वर्गतावप्यभूताम् ॥ १८-६५

अत्र स्वर्गतौ इति असम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्ति ।

१५६—नैग्न्यसंछन्नदेहान्तरालं दुर्नक्षस्य ज्वालिना दाहितेन ।
योद्धुर्ग्रीष्मेणनमादीप्य मांसं पाकापूर्वस्वादमादे शिवाभिः ॥ १८-७९

अत्र पाकापूर्वस्वादाद्यसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ।

१५७—स का र ना ना र का स
का य सा द द सा य का ।
र सा ह वा वा ह सा र
ना द वा द द वा द ना ॥ १९-२७

अत्र प्रकृतस्याप्रकृतेनाध्यवसानाद् रूपातिशयोक्तिः ।

१५८—निपीडनादिव मिथो दानतोयमनारतम् ।
वपुर्भ्यामद्यापातादिभानामभितोऽगलत् ॥ १९-६८

अत्र सम्बन्धेऽसम्बन्धाभिधानादसम्बन्धातिशयोक्तिः ।

१५९—प्लुतेभकुम्भोरसिजं दक्षतजन्मभिः ।
आवर्त्तयन्तदोरस्तं द्विषां तद्योषिता च सः ॥ १९-११५

अत्र द्विषां योषितामस्तं श्लेषमूलाभेदातिशयोक्तिः ।

१६०—सदानवदलप्रायः समुद्धृतरसो वनी ।
प्रतीतविक्रमः श्रीमान्हरिर्हरिरिवापरः ॥ १९-११६

प्रकृतस्याप्रकृतेनाध्यवसानाद् रूपातिशयोक्तिः ।

१६१—इतरेतरसंनिकर्षजन्मा घनसंघट्टविकीर्णविस्फुलिङ्गः ।
पटलानि लिहन्बलाहकानामपरेषु क्षणमज्वलत्कृशानुः ॥ २०-२६

अत्रासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ।

१६२-गुरुवेगविराविभिः पतत्रैरिपवः काञ्चनपिङ्गलाङ्गभासः ।
विनतासुतवत्तलं भुवः स्म व्यथितभ्रान्तभुजंगमं विशन्ति ॥ २०-३०

अत्रासम्बन्धे सम्बन्धाभिधानात् सम्बन्धरूपातिशयोक्तिः ।

१६३-पततां परितः परिस्फुरद्भिः परिपिङ्गीकृतदिङ्मुखैर्मयूखैः ।
सुतरामभवद्दुरीक्ष्यबिम्बस्तपनस्तत्किरणैरिवात्मदर्शः ॥ २०-५५

अत्र तपनस्य दुरीक्ष्यत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ।

१६४-अभितः क्षुभिताम्बुराशिधीरध्वनिराकृष्टसमूलपादपौघः ।
जनयन्नभवद्युगान्तशङ्कामनिलो नागविपक्षपक्षजन्मा ॥ २०-५७

अत्र पादपोन्मूलनासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ।

१६५-प्रचलत्पतगेन्द्रपत्रवातप्रसभोन्मूलितशैलदत्तमार्गः ।
भयविह्वलमाशु दन्दशूकैर्विवशैराविविशे स्वमेव धाम ॥ २०-५८

दन्दशूकानां रन्ध्रप्रवेशासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ।

१६६-गुरुतापविशुष्यदम्बुशुभ्राः क्षणमालम्ब्य कृशानुताम्रभासः ।
स्वमसारतया मषीभवन्तः पुनराकारमवापुरम्बुवाहाः ॥ २०-६३

अत्र मेघानां मषीभावाद्यसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ।

# तुल्ययोगिता

१–चयस्त्विषामित्यवधारित पुरा ततः शरीरीति विभाविताकृतिम् ।
विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः ॥ १-३

अत्र त्रयाणामप्रस्तुतानामेकक्रिययाभिसंबंधात्तुल्ययोगिता ।

२–पुराणि दुर्गाणि निशातमायुधं बलानि शूराणि घनाश्च कञ्चुकाः ।
स्वरूपशोभैकगुणानि नाकिना गणैर्यमाशङ्क्य तदादि चक्रिरे ॥१-४५

अत्र चक्रिरे क्रियया पुराणीत्यादीनामभिसंबंधात्तुल्ययोगिता ।

३–सलीलयातानि न भर्तुरभ्रमोर्न चित्रमुच्चैःश्रवसः पदक्रमम् ।
अनुद्रुतः संयति येन केवलं बलस्य शत्रुः प्रशशंस शीघ्रताम् ॥ १-५२

केवलप्रकृतास्पदा तुल्ययोगिता सा चैकक्रियाभिसंबंधा ।

४–विरोधिवचसो मूकान्वागीशानपि कुर्वते ।
जडानप्यनुलोमार्थान्प्रवाचः कृतिनां गिरः ॥ २-२४

अप्रस्तुतानामत्र कुर्वते इति क्रियाभिसम्बन्धात्तुल्ययोगिता ।

५–सखा गरीयान् शत्रुश्च कृत्रिमस्तौ हि कार्यतः ।
स्याताममित्रौ मित्रे च सहजप्राकृतावपि ॥ २-३६

अप्रस्तुतविषया तुल्ययोगिता सा चैकक्रियाभिसंबंधा ।

६–तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत् ।
हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम् ॥ २-४९

ग्रसत इति क्रियया प्राकरणिकयोः कर्मतयाभिसम्बन्धात्तुल्ययोगिता ।

७—तस्य मित्राण्यमित्रास्ते ये च ये चोभये नृपाः ।
अभियुक्तं त्वयैनं ते गन्तारस्त्वामतः परे ॥ २-१०१

गन्तारः क्रियया शब्दद्वयोःकर्मतयाभिसम्बन्धात्तुल्ययोगिता ।

८—रम्या इति प्राप्तवतीः पताकाः रागं विविक्ता इति वर्धयन्तीः ।
यस्यामसेवन्त नमद्वलीकाः समं वधूभिर्वलभीर्युवानः ॥ ३-५३

अत्र प्रकृतानामेव धर्मसाधर्म्येण तुल्ययोगिता ।

९—सुगन्धितामप्रतियत्नपूर्वां बिभ्रन्ति यत्र प्रमदाय पुंसाम् ।
मधूनि वक्त्राणि च कामिनीनामामोदकर्मव्यतिहारमीयुः ॥ ३-५४

मधूनां वक्त्राणां च प्रकृतत्वात्तत्पूर्वक एव तुल्ययोगिता ।

१०-यस्यामजिह्मा महतीमपङ्काः सीमानमत्यायतयोऽत्यजन्तः ।
जनैरजातस्खलनैर्न जातु द्वयेऽप्यमुच्यन्त विनीतमार्गाः ॥ ३-५७

द्वयानां मार्गाणामभिसम्बन्धात्तुल्ययोगिता सा च श्लिष्टा ।

११—कला दधानः सकलाः स्वभाभिरुद्भासयन्सौधसिताभिराशाः ।
यो रेवतीजानिरियेष हातुं न रौहिणेयो न च रोहिणीशः ॥ ३-६०

एकक्रियाभिसंबंधात् केवलप्रकृतविषया तुल्ययोगिता ।

१२—अच्छादितायतदिगम्बरमुच्चकैर्गा-
माक्रम्य संस्थितमुदग्रविशालशृङ्गम् ।
मूर्ध्नि स्खलत्तुहिनदीधितिकोटिमेन-
मुद्वीक्ष्य को भुवि न विस्मयते नगेशम् ॥ ४-१६

१३–उदन्वतोऽस्मिन्निलनन्ति मेरोः समानवप्रे मणिसानुरागाः ।
स्त्रियश्च पत्यौ सुरसुन्दरीभिः समा नवप्रेमणि सानुरागाः ॥ ४-२३

अत्र प्रस्तुतविषया तुल्ययोगिता सा चैकक्रियाभिसंबंधा ।

१४–बिम्बोष्ठं बहु मनुते तुरगवक्त्र-
श्चुम्बन्तं मुखमिह किंनरं प्रियायाः ।
श्लिष्यन्तं मुहुरितरोऽपि तं निजस्त्री-
मुत्तुङ्गस्तनभरभङ्गभीरुमध्याम् ॥ ४-३८

मनुते इत्येकयाक्रियया प्रस्तुतयोरभिसंबंधात्तुल्ययोगितालङ्कारः ।

१५–दन्तोज्ज्वलासु विमलोपलमेखलान्ताः
सद्रत्नचित्रकटकासु बृहन्नितम्बाः ।
अस्मिन् भजन्ति घनकोमलगण्डशैला
नार्योऽनुरूपमधिवासमधित्यकासु ॥ ४-४०

केवलप्रस्तुतगोचरा तुल्ययोगिता श्लेषोत्थापिता च सा ।

१६–प्रायस्तमैक्षत जनश्चटुलाग्रपादं
गच्छन्तमुच्चलितचामरचारुमश्वम् ।
नागं पुनर्मृदु सलीलनिमीलिताक्षं
सर्वः प्रियः खलु भवत्यनुरूपचेष्टः ॥ ५-९

एकक्रियासंबंधात् तुल्ययोगिता सा च प्रस्तुतविषया ।

१७–जगति नैशमशीतकरः करैर्वियति वारिदवृन्दमयं तमः ।
जलजराजिषु नैद्रमदिद्रवन् महतामहताः क्व च नाग्रहः ॥ ६-४३

केवलप्रस्तुतास्पदा तुल्ययोगिता सा चैकक्रियाभिसंबंधा ।

१८–कुर्वन्तमित्यतिभरेण नगानवाचः
पुष्पैर्विराममलिना च न मानवाचः ।
श्रीमान्समस्तमनुसानु गिरौ विहर्तुं
बिभ्रत्पयोदि स मयूरगिरा विहर्तुम् ॥ ६-७६

कुर्वंतमित्येकया क्रियया नगविरामयोः कर्मतयाभिसंबधात्तुल्ययोगिता ।

१९–इति गदितवतो रुषा जघान स्फुरितमनोरमपक्ष्मकेसरेण ।
श्रवणनियमितेन कान्तमन्या सममसिताम्बुरुहेण चक्षुषा च ॥ ७-४६

स्फुरितेत्यादितुल्यधर्मेण प्रस्तुतयोरभिसम्बन्धात्तुल्ययोगिता ।

२०–शृंगाणि द्रुतकनकोज्ज्वलानि गन्धाः
कौसुम्भं पृथु कुचकुम्भसङ्गि वासः ।
मार्द्वीकं प्रियतमसंनिधानमासन्
नारीणामिति जलकेलिसाधनानि ॥ ८-३०

तुल्यधर्माभिसंबधा केवलप्रकृतगोचरा तुल्ययोगिता ।

२१–अभ्यूनं गुणममृतस्य धारयन्ती
संफुल्लस्फुरितसरोरुहावतंसा ।
प्रेयोभिः सह सरसी निषेव्यमाणा
रक्तत्वं व्यधित वधूदृशां सुरा च ॥ ८-५७

तुल्यक्रियाभिसंबंधा प्रकृतगोचरा तुल्ययोगिता ।

२२–अनुलेपनानि कुसुमान्यबलाः कृतमन्यवः पतिषु दीपदशाः ।
समयेन तेन चिरसुप्तमनोभवबोधनं सममबोधिषत ॥ ६-२४

गन्धमाल्यादीनां प्रस्तुतानामवबोधनरूपैकधर्मसंबधात्तुल्ययोगिता ।

२३–युगपद्विकासमुदयाद्गमिते शशिनः शिलीमुखगणोऽलभत ।
द्रुतमेत्य पुष्पधनुषो धनुषः कुमुदेऽङ्गनामनसि चावसरम् ॥ ९-४१

प्रकृतगोचरा तुल्ययोगिता सा चैकधर्माभिसम्बधा ।

२४–विधृते दिवा समवयस्यमा च पुरः परिपूर्णमण्डलविकाशभृति ।
हिमधाम्नि दर्पणतले च मुहुः स्वमुखश्रियं मृगदृशो ददृशुः ॥ ९-४३

एकक्रियाभिसम्बधा प्रस्तुतगोचरा तुल्ययोगिता ।

२५–कापिशायनसुगन्धि विघूर्णन्नुन्मदोऽधिशयितुं समदेन ।
फुल्लदृष्टि वदनं प्रमदानामब्जचारु चषकं च पस्पृधे ॥ १०-४

प्रस्तुतगोचरा तुल्ययोगिता सा चैकधर्माभिसम्बधा ।

२६–बिभ्रतो मधुरतामधिपात्रं कामिभिर्युगपदेव पपाते ।
आननैर्मधुरसो विकसद्भिर्नासिकाभिरसितोत्पलगन्धः ॥ १०-८

रसगन्धयोः प्रकृतयोरेकपानक्रियासम्बधात्तुल्ययोगिता ।

२७–हावहारि हसितं वचनानां कौशलं दृशि विकारविशेषाः ।
चक्रिरे भृशमृजोरपि वध्वाः कामिनेव तरुणेन मदेन ॥ १०-१३

चक्रिरे इत्येकया क्रियया हसितादीनां कर्मतयाभिसम्बधात्तुल्ययोगिता ।

२८–स्पर्शभाजि विशदच्छविचारौ कल्पिते मृगदृशां मुक्ताये ।
सन्नति दधति पेतुरजस्रं हृदय प्रियतमे शयने च ॥ १०-३६

केवलप्रकृतगोचरा तुल्ययोगिता सा चैकधर्माभिसम्बधा ।

२९–पाणिरोधमविरोधितवाञ्छं भर्त्सनाश्च मधुरस्मितगर्भाः ।
कामिनः स्म कुरुते करभोरूर्हारि शुष्करुदितं च सुखेऽपि ॥ १०-६९

कुरुते इत्येकया क्रियया पाणिरोधादीनामभिसम्बधात्तुल्ययोगिता ।

३०–अन्यकालपरिहार्यमजस्रं तद् द्वयेन विदधे द्वयमेव ।
धृष्टता रहसि भर्तृषु ताभिर्निर्दयत्वमितरैरबलासु ॥ १०-७१

अत्र प्रकृतयोर्विधानक्रियायौगपद्यं गम्यत इति तुल्ययोगिता ।

३१–सीत्कृतानि मणितं करुणोक्तिः स्निग्धमुक्तमलमर्थवचांसि ।
हारभूषणरवाश्च रमण्याः कामसूत्रपदतामुपजग्मुः ॥ १०-७५

उपजग्मुरित्येकया क्रियया सीत्कृतादीनामसंबंधात्तुल्ययोगिता ।

३२–दधदसकलमेकं खण्डितामानमद्भिः
श्रियमपरमपूर्णामुच्छ्वसद्भिः पलाशैः ।
कलरवमुपगीते षट्पदौघेन धत्तः
कुमुदकमलखण्डे तुल्यरूपामवस्थाम् ॥ ११-१५

प्रकृतगोचरा तुल्ययोगिता सा चैकक्रियाभिसंबंधा ।

३३–कुमुदवनमपश्रि श्रीमदम्भोजषण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिलसितानां ह्री विचित्रो विपाकः ॥ ११-६४

क्रियाभिसंबंधा प्रकृतगोचरा तुल्ययोगिता ।

३४–ओजस्विवर्णोज्ज्वलवृत्तशालिनः प्रसादिनोऽनुज्झितगोत्रसंविदः ।
श्लोकानुपेन्द्रस्य पुरःस्म भूयसो गुणान् समुद्दिश्य पठन्ति बन्दिनः ।१२-३

श्लेषोत्थापिता प्रकृतगोचरा तुल्ययोगिता सा चैकधर्माभिसंबंधा ।

३५–उच्चैर्गतामस्खलितां गरीयसीं तदातिदूरादपि तस्य गच्छतः ।
एके समूहुर्बलरेणुसंहतिं शिरोभिराज्ञामपरे महीभृतः ॥ १२-४५

श्लेषगर्भा प्रकृतास्पदा तुल्ययोगिता सा चैकक्रियाभिसंबंधा ।

३६—भग्नद्रुमाश्चक्रुरितस्ततो दिशः समुल्लसत्केतनकाननाकुलाः ।
पिष्टाद्रिपृष्ठास्तरसा च दन्तिनश्चलन्निजाङ्गाचलदुर्गमा भुवः ॥१२-४६

रूपकानुप्राणिता प्रकृतगोचरा तुल्ययोगिता सा चैकक्रियाभिसंबधा ।

३७—अपदान्तरं च परितः क्षितिक्षितामपतन्द्रुतभ्रमितहेमनेमयः ।
जविमारुताञ्चितपरस्परोपमक्षितिरेणुकेतुवसनाः पताकिनः ॥ १३-४

राष्ट्रवर्णने रेणूनां केतूनां च प्रकृतत्वात्केवलप्रकृतास्पदातुल्ययोगिता ।

३८—नापचारमगमन्क्वचित्क्रिया. सर्वमत्र समपादि साधनम् ।
अत्यशेरत परस्परं श्रियः सम्रिणो नरपतेश्च संपदः ॥ १४-३२

प्रकृतास्पदा तुल्ययोगिता सा चैकक्रियाभिसंबधा ।

३९—नानवाप्तवसुनार्थकाम्यता नाचिकित्सितगदेन रोगिणा ।
इच्छताशितुमनाशुषा न च प्रत्यगामि तदुपेयुषा सदः ॥ १४-४६

केवलप्रकृतविषया तुल्ययोगिता सा चैकधर्माभिसंबंधा ।

४०—स्नातकं गुरुमभीष्टमृत्विजं सप्रजा च सह मेदिनीपतिम् ।
अर्घभाज इति कीर्तयन्ति षट् ते च ते युगपदागताः सदः ॥ १४-५५

स्नातकादीनां प्रकृतानामर्घभाज इति धर्माभिसंबंधात्तुल्ययोगिता ।

४१—क्षोभयन्ति परितः प्रभाविनो मन्यमत्ति विनिवारिताऽऽपदः ।
स्वर्णमर्कं मुग्धभुवः स्वयम्भुवो भूमुजश्च परलोकजिष्णवः ॥ १४-५६

अत्र प्रकृतानामेव प्रतापादिसाधर्म्येणोपमानात्तुल्ययोगिता ।

४२—तात नोदधिविलोडनं प्रति त्वद्विनाथ वयमुत्सहामहे ।
यः सुरैरिति सुरौघवल्लभो वल्लवैश्च जगदे जगत्पतिः ॥ १४-८२

प्रकृतविषया तुल्ययोगिता सा चैकक्रियाभिसंबंधा ।

४३–यः कौलतां वल्लवतां च बिभ्रद्दंष्ट्रामुदस्यान्तु भुजां च गुर्वीम् ।
मग्नस्य तोयापदि दुस्तरायां गोमण्डलस्योद्धरणं चकार ॥ १४-८६

प्रकृतविषया तुल्ययोगिता सा चैकक्रियाभिसंबंधा ।

४४–मृगमङ्कमादमरशान्त्वमविशदद्दल कपोलयोः ।
वाक्यमन्यकलमपास्य मद विदधुस्तदीयगुणमात्मना शुचः ॥१५-८२

विदधुरित्येकया क्रियाभिसंबंधात् प्रकृतविषया तुल्ययोगिता ।

४५–क्रियते धवलः खलूच्चकैर्धवलैरेव सितेतरैरघः ।
शिरसौघमधत्त शंकरः सुरसिन्धोर्मधुजित्तमङ्घ्रिणा ॥ १६-४६

अप्राकरणिकविषया तुल्ययोगिता सा चैकक्रियाभिसंबंधा ।

४६–तुहिनांशुममुं सुहृज्जना कलयन्त्युष्णरुचिं विरोधिनः ।
कृतिभिः कृतदृष्टिविभ्रमाः स्रजमेके भुजगं यथापरे ॥ १६-६४

प्रकृतास्पदातुल्ययोगिता सा चैकक्रियाभिसंबंधा ।

४७–दुरुहाः क्षणमपरैस्तदन्तरे रणश्रवादुपचयमाशु बिभ्रति ।
महीभुजां महिमभृतां न संममुर्मुदोऽन्तरा वपुषि बहिश्च कञ्चुकाः ॥ १७-२२

केवलप्रकृतास्पदातुल्ययोगिता सा चैकधर्माभिसंबंधा ।

४८–गजव्रजाक्रमणभरावनम्रया रसातलं यदखिलमानशे भुवा ।
नभस्तलं बहलतरेण रेणुना ततोऽगमत्त्रिजगदिवैकतां स्फुटम्।१७-६५

प्रकृतविषयातुल्ययोगिता सा चैकक्रियाभिसंबंधा ।

४९–पत्तिः पत्तिं वाहमेयाय वाजी नागं नागः स्यन्दनस्थो रथस्थम् ।
इत्थं सेना वल्लभस्येव रागादङ्गेनाङ्गं प्रत्यनीकस्य भेजे ॥ १८-२

एकक्रियाभिसंबंधा तुल्ययोगिता सा च केवलप्रकृतास्पदा ।

५०–उच्चनादं सन्धिनिनिष्ठुराणि स्थूलान्युच्चैर्मण्डलत्वं दधन्ति ।
आस्फाल्यन्ते कार्मकाणि स्म कामं हस्त्यारोहैः कुञ्जराणां शिरांसि ॥१८-

केवलप्रकृतविषया तुल्ययोगिता सा चैकधर्माभिसंबंधा ।

५१–द्राघीयांसः संहताः स्थेमभाजश्चारुदग्रास्तीक्ष्णतामत्यजन्तः ।
दन्ता दन्तैराहता सामजाना भङ्गं जग्मुर्न स्वयं सामजाना ॥१८-

प्रकृतविषयैकक्रियाभिसंबंधात्तुल्ययोगिता ।

५२–प्रत्यावृत्तं भङ्गभाजि स्वसैन्ये तुल्यं मुक्तं राविरन्ति स्म कश्चित् ।
एकौघेन स्वर्णपुङ्खं द्विषन्तः सिद्धा माल्यैः साधुवादैः ये ऽपि ॥ १८-

केवलप्रकृतास्पदा तुल्ययोगिता सा चैकक्रियाभिसंबंधा ।

५३–स्वर्गवासं कारयन्त्या चिराय प्रत्यग्रत्व प्रत्यहं धारयन्त्या ।
कश्चिद्भेजे दिव्यनार्या परस्मिल्लोके लोकं प्रीणयन्त्येह कीर्त्या ॥१८-६

तुल्यधर्मसंबंधात्केवलप्रकृतास्पदा तुल्ययोगिता ।

५४–निपीड्य तरसा तेन मुक्ताः काममनायुषः ।
उपाययुर्विलक्षत्वं विद्विषो न शिलीमुखाः ॥ १६-१८

प्राकरणिकविषया तुल्ययोगिता सा च तुल्यधर्माभिसंबंधा ।

५५–कृतोरुवेगं युगपद्व्यजिगीषन्त सैनिकाः ।
विपक्षं बाहुपरिघैर्जङ्घाभिरितरेतरम् ॥ १६-२२

केवलप्रकृतास्पदा तुल्ययोगिता सा चैकक्रियाभिसंबंधा ।

५६–वाजिनः शत्रुसैन्यस्य समारब्धनवाजिनः ।
वाजिनश्च शरा मध्यमविशन्द्रुतवाजिनः ॥ १६-६२

केवलप्रकृतास्पदा तुल्ययोगिता सा चैकक्रियाभिसंबंधा ।

५७–दिङ्मुखव्यापिनस्तीक्ष्णान्ह्लादिनो मर्मभेदिनः ।
चिक्षेपैकक्षणेनैव सायकानहिताश्च सः ॥ १९-९५

अत्र प्रकृतानां तुल्यधर्मयोगात् तुल्ययोगिता ।

५८–न केवलं जनैस्तस्य लघुसन्धायिनो धनुः ।
मण्डलीकृतमेकान्तादुद्बलमौलि द्विषामपि ॥ १९-९७

तुल्यधर्मयोगात्केवलप्रकृतास्पदा तुल्ययोगिता ।

५९–उद्धतान्द्विषतस्तस्य निघ्नतो द्वितयं पपुः ।
पानार्थं रुधिरं धातौ रक्षार्थं भुवनं शराः ॥ १९-१०३

पानयोरभेदाध्यवसायेन केवलप्रकृतास्पदा तुल्ययोगिता ।

६०–सौनल्पशोचितमुर्वं शून्यतां दधदक्रियम् ।
शकुन्तिनि शशुवन व्यापि तस्येषुभिर्नभः ॥ १९-११३

तुल्यधर्मयोगित्वात्तुल्ययोगिता सा च प्रकृतविषया ।

६१–स्तनेभकुम्भोरसिजैर्हृदयक्षतिजन्मभिः ।
प्रावर्तयन्नदीरस्त्रं द्विषां तद्योषितां च सः ॥ १९-११५

अनयोस्तुल्यधर्मयोगित्वात्तुल्ययोगिता सा च प्राकरणिकविषया ।

६२–प्रमनोहरन्ता यती जनस्य क्षणमालोकपथान्नभःसदां च ।
रुध्वे पिहितार्द्रिपचूनिर्ध्याविशिखैरन्तरिता च्युता धरित्री ॥ २०-१५

तुल्यधर्मयोगात्तुल्ययोगिता सा च केवलप्रकृतास्पदा ।

# दीपकम्

१—पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हराऽमराङ्गनाः ।
विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्निशं दिवः ॥१-५१

अत्रावस्कन्देत्यादिष्वनेकक्रियास्वेककर्तृकारकत्वाद्दीपकमलङ्कारः ।

२—तीक्ष्णा नारुन्तुदा बुद्धिः कर्म शान्तं प्रतापवत् ।
नोपतापि मनः सोष्म वागेका वाग्मिनः सतः ॥ २-१०९

अत्र प्रकृताया वाचोऽप्रकृतानां बुद्धिकर्ममनसां च तुल्यधर्माद्दीपकम् ।

---

# प्रतिवस्तूपमा

१—उपप्लुतं पातुमदो मदोद्धतैस्त्वमेव विश्वम्भर विश्वमीशिषे ।
ऋते रवेः क्षालयितुं क्षमेत कः क्षपातमस्काण्डमलीमसं नभः ॥१-३८

अत्र वाक्यद्वये समानधर्मस्यैकस्य ईशिषे क्षमेतेति शब्दद्वयेन वस्तुभावेन निर्देशात्तत्रापि व्यतिरेकमुखत्वाद्वैधर्म्येण प्रतिवस्तूपमा ।

२—भवद्गिरामवसरप्रदानाय वचांसि नः ।
पूर्वरङ्गः प्रसङ्गाय नाटकीयस्य वस्तुनः ॥ २-८

अत्र वचांसिपूर्वरङ्गयोः प्रसङ्गत्वस्वरूपसामान्यस्य वाक्यद्वये शब्दान्तरे पृथङ्निर्देशात्प्रतिवस्तूपमालङ्कारः ।

३—नैतल्लघ्वपि भूयस्या वचो वाचातिशय्यते ।
इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम् ॥ २-२३

अत्रातिशय्यतेऽस्येति इत्युभयोरपि एकातिक्रमार्थत्वात् अय च तादृशपृथङ्निर्देशात् साधर्म्येण प्रतिवस्तूपमा ।

---

# निदर्शना

१—महामहानीलशिलारुचः पुरो निषेदिवान् कंसकृपः स विष्टरे ।
श्रितोदयाद्रेरभिसायमुच्चकैरचूचुरच्चन्द्रमसोऽभिरामताम् ॥ १-१६

असम्भवद्वस्तुसम्बन्धरूपा निदर्शना शुद्धपदार्थगा च सा ।

२—ओमित्युक्तवतोऽथ शार्ङ्गिण इति व्याहृत्य वाचं नभ-
स्तस्मिन्नुत्पतिते पुरः सुरमुनाविन्दोः श्रियं बिभ्रति ।
शत्रूणामनिशं विनाशपिशुनः क्रुद्धस्य चैद्यं प्रति,
व्योम्नीव भ्रुकुटिच्छलेन वदने केतुश्चकारास्पदम् ॥ १-७

असम्भवद्वस्तुसम्बन्धरूपो निदर्शनालंकारः स च शुद्धपदार्थगः ।

३—सार्धमुद्धवसीरिभ्यामथासावासदत्सदः ।
गुरुकाव्यानुगां बिभ्रच्चान्द्रीमभिनभः श्रियम् ॥ २-२

एकवाक्यगा शुद्धासम्भवद्वस्तुसम्बन्धरूपा निदर्शना ।

४—प्रोल्लसत्कुण्डलप्रोतपद्मरागदलत्विषा ।
कृष्णोत्तरासङ्गरुचं विदधच्चौतपल्लवीम् ॥ २-१६

वाक्यगाबाधितनिदर्शना ।

५—तृप्तियोगः परेणापि महिम्ना न महात्मनाम् ।
पूर्णश्चन्द्रोदयाकाङ्क्षी दृष्टान्तोऽत्र महार्णवः ॥ २-३१

संभवद्वस्तुसंबंधनिदर्शना सा चानेकवाक्यगा ।

६–विधाय वैरं सामर्षे नरोऽरौ य उदासते ।
प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम् ॥ २-४२

शुद्धानेकवाक्यगा निदर्शना सा च सम्भवद्वस्तुसम्बन्धा ।

७–प्राप्यता विद्युता सम्पत्सम्पर्कादर्करोचिषाम् ।
शस्त्रैर्द्विपच्छिरश्छेदप्रोच्छलच्छोणितोक्षितैः ॥ २-६६

शुद्धवाक्यगा निदर्शना सा चासम्भवद्वस्तुसंबधा ।

८–मृणालसूत्रामलमन्तरेण स्थितश्चलच्चामरयोर्द्वयं सः ।
भेजेऽभितः पातुकसिद्धसिन्ध्योरभूतपूर्वां रुचमम्बुराशेः ॥ ३-३

शुद्धानेकवाक्यगा निदर्शना सा चासम्भवद्वस्तुरूपा ।

९–सावर्ण्यभाजा प्रतिमागतानां लक्ष्यैः स्मरापाण्डुतयाङ्गनानाम् ।
यस्यां कपोलैः कलधौतधामस्तम्भेषु भेजे मणिदर्पणश्रीः ॥ ३-४७

असम्भवद्वस्तुसंवधा निदर्शना सा च शुद्धैकवाक्यगा ।

१०–यत्राधिरूढेन महीरुहोच्चैरुन्निद्रपुष्पाक्षिसहस्रभाजा ।
सुराधिपाधिष्ठितहस्तिमल्ललीलां दधौ राजतगण्डशैलः ॥ ४-१३

शुद्धवाक्यगा निदर्शना सा चासंभवद्वस्तुरूपा ।

११–उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ॥४-२०

शुद्धासंभवद्वस्तुरूपा निदर्शना सा चैकवाक्यगा ।

१२–एकत्र स्फटिकतटांशुभिन्ननीरा
नीलाश्मद्युतिभिदुराम्भसोऽपरत्र ।

कालिन्दीजलजनितश्रिय. श्रयन्ते
वैदग्धीमिह सरित. सुरापगायाः ॥ ४-२६

असंभवद्वस्तुरूपनिदर्शना सा चैकवाक्यगा ।

१३–उच्चैर्महारजतराजिविराजितासौ
दुर्वर्णभित्तिरिह सान्द्रसुधासवर्णा ।
अभ्येति भस्मपरिपाण्डुरितस्मरारे-
रुद्वह्निलोचनललामललाटलीलाम् ॥ ४-२८

असम्भवद्वस्तुसम्बन्धरूपो निदर्शनालंकारः स चानेकवाक्यगः ।

१४–व्योमस्पृशः प्रथयता कलधौतभित्ती-
रुन्निद्रपुष्पचणचम्पकपिङ्गभासः ।
सौमेरवीमधिगतेन नितम्बशोभा-
मेतेन भारतमिलावृतवद्विभाति ॥ ४-३१

शुद्धानेकवाक्यगा निदर्शना सा च वाधितरूपा ।

१५–मुक्तं मुक्तागौरमिह क्षीरमिवाभ्रै –
र्वापीष्वन्तर्लीनमहानीलदलासु ।
शस्त्रीश्यामैरंशुभिराशु द्रुतमम्भ-
श्छायामच्छामृच्छति नीलीसलिलस्य ॥ ४-४४

शुद्धैकवाक्यगा निदर्शना सा चासम्भवद्वस्तुरूपा ।

१६–आच्छाद्य पुष्पपटमेष महान्तमन्त-
रावर्तिभिर्गृहकपोतशिरोधराभैः ।
स्वाङ्गानि धूमरुचिमागुरवीं दधानै-
र्धूपायतीव पटलैर्नवनीरदानाम् ॥ ४-५२

असभवद्वस्तुसम्बन्धरूपो निदर्शनालंकारः स चोत्प्रेक्षानुप्राणितः ।

१७—मरकतमयमेदिनीषु भानो-
स्तरुविटपान्तरपातिनो मयूखाः ।
अवनतशितिकण्ठकण्ठलक्ष्मी-
मिह दधति स्फुरिताणुरेणुजालाः ॥ ४-५६

शुद्धैकवाक्यगा निदर्शना सा चासंभवद्वस्तुरूपा ।

१८—नवनगवनलेखाश्याममध्याभिराभिः
स्फटिककटकभूमिर्नाटयत्येष शैलः ।
अहिपरिकरभाजो भास्मनैरङ्गरागै-
रधिगतधवलिम्नः शूलपाणेरभिख्याम् ॥ ४-६५

पदार्थगा शुद्धनिदर्शना सा चासंभवद्वस्तुसम्बन्धा ।

१९—अनुकृतशिखरौघश्रीभिरभ्यागतेऽसौ
त्वयि सरभसमभ्युत्तिष्ठतीवाद्रिरुच्चैः ।
द्रुतमरुदुपनुन्नैरुन्नमद्भिः सहेलं
हलधरपरिधानश्यामलैरम्बुवाहैः ॥ ४-६८

शुद्धवाक्यगा निदर्शना सा चासंभवद्वस्तुसंबंधा ।

२०—तं स द्विपेन्द्रतुलितातुलतुङ्गशृङ्ग-
मभ्युल्लसत्कदलिकावनराजिमुच्चैः ।
विस्ताररुद्धवसुधोऽन्वचलं चचाल
लक्ष्मीं दधत्प्रतिगिरेरलघुर्बलौघः ॥ ५-२

शुद्धासंभवद्वस्तुसंबंधनिदर्शना सा च वाक्यगा ।

२१—जज्ञे जनैर्मुकुलिताक्षमनाददाने
संरब्धहस्तिपकनिष्ठुरचोदनाभिः ।

गम्भीरवेदिनि पुरः कवलं करीन्द्रे
मन्दोऽपि नाम न महानवगृह्य साध्यः ॥ ५-४९

शुद्धसंभवद्वस्तुसंबंधो निदर्शनालंकारोऽयम् ।

२२–अवगणिताखिलशैलवना मुहुर्विदधतो पथिकान् परितापिनः ।
विकचकिंशुकसंहतिरुच्चकैरुदवहद्दवहव्यवहश्रियम् ॥ ६-२१

असंभवद्वस्तुसंबंधा निदर्शना सा चैकवाक्यगा ।

२३–अविरलपुलकः सह ब्रजन्त्याः प्रतिपदमेकतरः स्तनस्तरुण्याः ।
घटितविघटितः प्रियस्य वक्षस्तटभुवि कन्दुकविभ्रमं बभार ॥ ७-१५

असंभवद्वस्तुसंबंधा शुद्धनिदर्शना सा चैकवाक्यगा ।

२४–संक्षोभं पयसि मुहुर्महेभकुम्भश्रीभाजा कुचयुगलेन नीयमाने ।
विश्लेषं युगमगमद्रथाङ्गनाम्नोरुद्वृत्तः क इव सुखावहः परेषाम् ॥८-१८

असम्भवद्वस्तुसम्बन्धो निदर्शनालंकारः स च शुद्धवाक्यगः ।

२५–कस्याश्चिन्मुखमनु धौतपत्रलेखं
व्यातेने सलिलभरावलम्बिनीभिः ।
किंजल्कव्यतिकरपिञ्जरान्तराभि-
श्चित्रश्रीरलमलकाग्रवल्लरीभिः ॥ ८-५६

वाक्यार्थवृत्तिनिदर्शना सा च शुद्धासंभवद्वस्तुसंबंधा ।

२६–विधृते दिवा सवयसा च पुरः परिपूर्णमण्डलविकाशभृति ।
हिमधाम्नि दर्पणतले च मुहुः स्वमुखश्रियं मृगदृशो ददृशुः ॥ ९-५३

असम्भवद्वस्तुसम्बन्धा निदर्शना सा चैकवाक्यगा ।

२७–मधुरोन्नतभ्रु ललितं च दृशोः सकरप्रयोगचतुरं च वचः ।
प्रकृतिस्थमेव निपुणागमितं स्फुटनृत्यलीलमभवत्सुतनोः ॥ ६-७६

सम्भवद्वस्तुसम्बन्धा निदर्शना सा च शुद्धा ।

२८–गण्डभित्तिषु पुरा सहशीषु व्याञ्जि नाञ्चितदृशा प्रतिमेन्दुः ।
पानपाटलितकान्तिषु पश्चाद्रोध्रचूर्णतिलकाकृतिरासीत् ॥ १०-३१

अनेकवाक्यगा शुद्धा निदर्शना सा चासभवद्वस्तुसबंधा ।

२६–मदरुचिमरुणेनोद्गच्छता लम्भितस्य
त्यजत इव चिराय स्यायिनीमाशु लज्जाम् ।
वसनमिव मुखस्य स्रंसते संप्रतीदं
सितकरकरजालं वासवाशायुवत्या. ॥ ११-१६

असमवद्वस्तुसबधा निदर्शना सा चैकवाक्यगा ।

३०–दधति परिपतन्त्यो जालवातायनेभ्य-
स्तरुणतपनभासो मन्दिराभ्यन्तरेषु ।
प्रणयिषु वनितानां प्रातरिच्छत्सु गन्तुं
कुपितमदनमुक्तोत्तप्तनाराचलीलाम् ॥ ११-५०

असंभवद्वस्तुसंबंधा वाक्यैकगा निदर्शना सा च शुद्धा ।

३१–कालीयकक्षोदविलेपनश्रियं दिशद्दिशामुल्लसदंशुमद्द्युति ।
स्नात सुरैर्मुद्गभुजा विपप्रथे गिरेरधः काञ्चनभूमिजं रज. ॥१२-१

असभवद्वस्तुसबधा निदर्शना सा चैकवाक्यगा ।

३२–सुखवेदनाहृषितरोमकूपया शिथिलीकृतेऽपि वसुदेवजन्मनि ।
कुरभर्तुरङ्गनतया न तत्यजे विकसत्कदम्बनिकुरम्बचारुता ॥१३-१३

असंभवद्वस्तुसंबंधा निदर्शना सा च शुद्धवाक्यैकगा ।

३३–अचिराज्जितमीनकेतनो विलसद् वृष्णिगणैर्नमस्कृतः ।
क्षितिपः क्षयितोद्धवाऽन्धको हरलीलां स विडम्बयिष्यति ॥ १६-५८

असंभवद्वस्तुसम्बन्धा निदर्शना सा च श्लेषसंकीर्णा ।

३४–विलङ्घितस्थितिमभिवीक्ष्य रुक्षया
रिपोर्गिरा गुरुमपि गान्दिनीसुतम् ।
जनैस्तदा युगपरिवर्तवायुभि-
र्विवर्तिता गिरिपतयः प्रतीयिरे ॥ १७-१२

असंभवद्वस्तुसंबंधो निदर्शना सा च शुद्धवाक्यैकगा ।

३५–निरन्तरस्थगितदिगन्तरं ततः समुच्चलद्बलमवलोकयज्जनः ।
विकौतुकः प्रकृतमहाप्लवेऽभवद्विश्रृङ्खलं प्रचलितसिन्धुवारिणि ।१७-३०

असंभवद्वस्तुसंबंधा निदर्शना सा च वाक्यगा ।

३६–महस्रपूरणः कश्चिल्लूनमूर्धाऽसिना द्विषः ।
तदोर्ध्व एव काबन्धीमभजन्नर्तनक्रियाम् ॥ १९-५१

असम्भवद्वस्तुसंबंधो निदर्शनालंकारः स चैकवाक्यगः ।

३७–बहलाञ्जनपङ्कपट्टनीलद्युतयो देहमितस्ततः श्रयन्तः ।
दधिरे फणिनस्तुरगमेषु स्फुटपल्याणनिबद्धवर्ध्रलीलाम् ॥ २०-५०

असम्भवद्वस्तुसम्बन्धा निदर्शना सा च शुद्धवाक्यगा ।

३८–दधुरम्बुधिमन्थनाद्रिमन्थभ्रमणायस्तफणीन्द्रपित्तजानाम् ।
रुचमुल्लसमानवैनतेयद्युतिभिन्नाः फणभारिणो मणीनाम् ॥२०-५६

असम्भवद्वस्तुसम्बन्धनिदर्शनालंकारः स च शुद्धः ।

३६–कृतदाहमुदर्चिषः शिखाभिः परिषिक्तं मुहुरम्भसा नवेन ।
विगताम्बुधरवरणं प्रपेदे गगनं तापितपायिवासिलक्ष्मीम् ॥ २०-७५

संभवद्वस्तुसबंधनिदर्शना सा च रूपकसंकीर्णा ।

---

## दृष्टान्तः

१–नैतल्लघ्वपि भूयस्या वचो वाचाऽतिशय्यते ।
इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम् ॥ २-२३

अत्र समानधर्मविम्बितया दृष्टान्तालंकारः स च शुद्धसाधर्म्यमूलः ।

–विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभा ।
अनीत्वा पङ्कतां धूलिमुदकं मावतिष्ठते ॥ २-३४

साधर्म्यगतदृष्टान्तालंकारोऽयं स च शुद्धः ।

३–अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितम् ।
सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ॥ २-६२

अत्रोभयोर्वाक्ययोः साधर्म्येण दृष्टान्तालंकारः शुद्धश्च सः ।

४–सम्प्रत्यसाम्प्रतं वक्तुमुक्ते मुसलपाणिना ।
निर्धारितेऽर्थे लेखेन खलूक्त्वा खलु वाचिकम् ॥ २-७०

साधर्म्ये शुद्धदृष्टान्तालंकारोऽयं ।

५–तेजः क्षमा वा नैकान्तं कालज्ञस्य महीपतेः ।
नैकमोजः प्रसादो वा रसभावविदः कवेः ॥ २-८३

साधर्म्याश्रयाद्दृष्टान्तालंकारोऽयम् ।

६–वीतविघ्नमनघेन भाविता संनिधेस्तव मखेन मेऽधुना ।
को विहन्तुमलमास्थितोदये वासरश्रियमशीतदीधितौ ॥ १४-८

अत्र वाक्य भेदाद्बिम्बप्रतिबिम्बतया साधर्म्ये दृष्टान्तालंकारः ।

७–सादिताखिलनृप महन्महः सम्प्रति स्वनयसंपदैव ते ।
किं परस्य स गुणः समश्नुते पथ्यवृत्तिरपि यद्यरोगिताम् ॥ १४-१३

वाक्यभेदाद्बिम्बप्रतिबिम्बतया साधर्म्येऽत्र दृष्टान्तालंकारः ।

८–निर्गुणोऽपि विमुखो न भूपतेर्दानशौण्डमनसः परोऽभवत् ।
वर्षुकस्य किमपः कृतोन्नतेरम्बुदस्य परिहार्यमूषरम् ॥ १४-४६

अत्र बिम्बप्रतिबिम्बतया समानधर्माभिधानाद् दृष्टान्त ।

९–तव धर्मराज इति नाम कथमिदमपष्ठु पठ्यते ।
भौमदिनमभिदधत्यथ वा भृशमप्रशस्तमपि मंगलं जनाः ॥ १५-१७

अत्र वाक्यद्वये बिम्बप्रतिबिम्बकरणाद् दृष्टान्तालंकारः ।

१०–समाकुले सदसि तथापि विक्रियां मनोऽगमन्न मुरभिदः परोदितैः ।
घनाम्बुभिर्बहुलितनिम्नगाजलैर्जलं न हि व्रजति विकारमम्बुधेः ॥१७-१

अत्र बिम्बप्रतिबिम्बतया समानधर्माभिधानाद् दृष्टान्तालंकारः ।

११–न शून्यतामगमदसौ निवेशभूः प्रभूतता दधति बले चलत्यपि ।
पयस्यभिद्रवति भुवं युगात्यये सरित्पतिर्न हि समुपैति रिक्तताम् ।१७-४

समानधर्माभिधानात् बिम्बप्रतिबिम्बतया दृष्टान्तोऽयम् ।

१२–घनसन्तमसं जवेन भूयो यदुयोधैर्युधि रेधिरे द्विषन्तः ।
ननु वारिधरोपरोधमुक्तः सुतरामुत्तपते पतिः प्रभाणाम् ॥ २०-४०

अत्र यदुयोधानां द्युतिपतेश्च वाक्यभेदेन प्रतिबिम्बकरणाद् दृष्टान्त

# व्यतिरेकः

१–गतं तीरश्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः ।
पतत्यधो धाम विसारि सर्वतः किमेतदित्याकुलमीक्षितं जनैः ॥ १-२

उपमेयस्याधिक्यादाक्षिप्तौपम्ये श्लेषाभावे च व्यतिरेकालंकारः ।

२–जगत्यपर्याप्तसहस्रभानुना न यन्नियन्तुं समभावि भानुना ।
प्रसह्य तेजोभिरसंख्यतां गतैरदस्त्वया नुन्नमनुत्तमं तमः ॥ १-२७

उपमेयस्योत्कर्षे उभयोपादाने आक्षिप्तौपम्ये च व्यतिरेकालंकारः ।

३–पादाहतं यदुत्थाय मूर्धानमधिरोहति ।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥ २-४६

प्रस्तुतस्याधिक्यवर्णनादाक्षिप्तौपम्ये व्यतिरेकालंकारः ।

४–तुंगत्वमितरा नाद्रौ नेदं सिन्धावगाधता ।
अलघनीयताहेतुरुभयं तन्मनस्विनि ॥ २-४८

अप्रस्तुतस्य न्यूनत्ववर्णनादाक्षिप्तौपम्ये व्यतिरेकालंकारः ।

५–तुरगशताकुलस्य परितः परमेकतुरंगजन्मनः
प्रमथितभूभृतः प्रतिपथं मथितस्य भृशं महीभृता ।
परिचलतो बलानुजबलस्य पुरः सततं धृतश्रिय-
श्चिरविगतश्रियो जलनिधेश्च तदाऽभवदन्तरं महत् ॥३-८२

अप्रकृतस्य न्यूनत्ववर्णनात् प्रकृतस्य चाधिक्याद् व्यतिरेकालंकारः ।

६–प्रालेयशीतमचलेश्वरमीश्वरोऽपि
सान्द्रेभचर्मवसनावरणोऽधिशेते
सर्वर्तुनिर्वृतिकरे निवसन्नुपैति न
द्वन्द्वदुःखमिह किञ्चिदकिंचनोऽपि ॥४-६४॥

सादृश्यनिषेधरूपो व्यतिरेकालंकारः स चाक्षिप्तौपम्यः।

७–किसलयशकलेष्ववाचनीयाः पुलकिनि केवलमङ्गके निषेयाः।
नखपदलिपयोऽपि दापितार्थाः प्रणिदधिरे दयितैरनङ्गलेखाः॥ ७-३

लोकप्रसिद्धलेख्यवैलक्षण्याद्व्यतिरेकः सादृश्यनिषेधरूपोऽयम्।

८–मुदितयुवमनस्कास्तुल्यमेव प्रदोषे
रुचमदधुरुभय्य कल्पिता भूषिताश्च।
परिमलरुचिराभिर्व्यक्तताास्तु प्रभाते
युवतिभिरुपभोगान्नीरुचः पुष्पमालाः॥ ११-२७

पुष्पमालाभ्यो युवतीनां विमर्दसहत्वेनाधिक्योक्तेर्व्यतिरेकः।

९–विलुलितकमलौघः कीर्णवल्लीवितानः
प्रतिवनमवधूताशेषशाखिप्रसूनः।
क्वचिदयमनवस्थः स्थास्नुतामेति वायु-
र्मधुकुसुमविमर्दोद्गन्धिवेश्मान्तरेषु॥ ११-२८

विमर्दगन्धस्य कमलादिगन्धादाधिक्यकथनाद् व्यतिरेकः।

१०–लज्जते न गदितः प्रियं परो वक्तुरेव भवति त्रपाऽधिका।
व्रीडमेति न तव प्रियंवदो ह्रीमता तु भवतैव भूयते॥ १४-२

अत्र वक्तुः त्रपाधिक्याद् व्यतिरेकालंकारः स च सादृश्यनिषेधरूपः।

११–नोपमेति वितथस्तवैः परस्ते च तस्य सुलभाः शरीरिभिः ।
अस्ति न स्तुतिवचोऽनृतं तव स्तोत्रयोग्य न च तेन तुष्यसि ॥ १४-३

प्रस्तुतस्याधिक्यवर्णनाद् व्यतिरेकः स च सादृश्यनिषेधरूपः ।

१२–आद्यकोलतुलिता प्रकम्पनैः कम्पितां मुहुरनीदृगात्मनि ।
वाचि रोपितवताऽमुना महीं राजकाय विषया विलेभिरे ॥ १४-४२

उपमानादुपमेयस्याधिक्यकथनाद् व्यतिरेकः स चोपात्तहेतुगः ।

१३–आदितामजननाय देहिनामन्तता च दधतेऽनपायिने ।
बिभ्रते भुवमधः सदाऽथ च ब्रह्मणोऽप्युपरि तिष्ठते नमः ॥१४-६५

प्रस्तुतस्याधिक्यवर्णनाद् व्यतिरेकः स च सादृश्यनिषेधरूपः ॥

१४–केवलं दधति कर्तृवाचिनः प्रत्ययानिह न जातु कर्मणि ।
धातवः सृजतिसंहृतिस्तवः स्तौतिरत्र विपरीतकारकः ॥ १४-६६

भगवतः पुरुषान्तराधिक्यप्रतीतेर्व्यतिरेकः स च सादृश्यनिषेधरूपः ।

१५–द्राघीयांसः संहताः स्थेमभाजश्चारुदग्रास्तीक्ष्णतामत्यजन्तः ।
दन्ता दन्तैराहताः सामजानां भङ्गं जग्मुर्न स्वयं सामजाताः ॥ १८-३३

अत्रोपमेयानामुपमानदन्तापेक्षयाऽभग्नत्वेनाधिक्योक्तेर्व्यतिरेकः ।

१६–रामेण त्रिःसप्तकृत्वो ह्रदानां चित्रं चक्रे पञ्चकं क्षत्रियास्रैः ।
रक्ताम्भोभिस्तत्क्षणादेव तस्मिन्संख्येऽसंख्याः प्रावहन्द्वीपवत्यः । १८-७०

उपमानादुपमेयस्याधिक्योक्तेर्व्यतिरेकालंकारः ।

१७–निपीड्य तरसा तेन मुक्ताः काममनास्थया ।
उपाययुर्विलक्ष्यत्वं विद्विषो न शिलीमुखाः ॥ १९-१८

अत्र प्रस्तुतस्य विलक्षणत्वोक्तेर्व्यतिरेकः स च तुल्ययोगितासंकरः ।

१८–दंष्ट्रव्रणमयश्रीमदलंकरणभूषितः ।
दद्दशेऽन्यो रावणवदलङ्करणभूषितः ॥ १६-५२

उपमानादुपमेयस्याधिक्यकथनाद् व्यतिरेकः स चोपमासंकर.।

१९–शुद्धिं गतैरपि परामृजुभिर्विदित्वा बाणैरजय्यमविघट्टितमर्मभिस्त्वम् ।
मर्माऽतिगैरनृजुभिर्नितरामशुद्धैर्वाक्सायकैरथ तुतोद तदा विपक्षः ॥२०-७७

अत्र वाक्सायकानामधिककथनाद्व्यतिरेकालंकारः स च रूपकानुप्राणितः ।



# सहोक्तिः

१–उत्तुङ्गादनिलचलांशुकास्तटान्ता-
च्चेतोभिः सह भयदर्शिनां प्रियाणाम् ।
श्रोणीभिर्गुरुभिरतूर्णमुत्पतन्त्य-
स्तोयेषु द्रुततरमङ्गना निपेतुः ॥ ८-३१

चलांशुकाः चेतोभिः सहेति सहोक्तिरत्र सा च श्लेषरहिता ।

२–शुद्धमश्रुतिविरोधि बिभ्रतं शास्त्रमुज्ज्वलमवर्णसंकरैः ।
पुस्तकैः सममसौ गणं मुहुर्वाच्यमानमशृणोद् द्विजन्मनाम् ॥ १४-३७

अभेदाध्यवसाये श्लेषानुप्राणिता सहोक्तिः ।

३–समराय निकामकर्कशं क्षणमाकृष्टमुपैति यस्य च ।
धनुषा सममाशु विद्विषां कुलमाशङ्कितभङ्गमानतिम् ॥ १६-६३

कार्यकारणसाहचर्ये श्लेषसहिता सहोक्तिरत्र ।

४–मग्नेऽपीभे स्वे परावर्त्य देहं योद्‌ध्रा सार्धं व्रीडया मुञ्चतेषून् ।
साकं मन्तुः संमदेनानुबन्धी दूनोऽमोच्यं वारणः प्रत्यरोधि ॥ १८-२६

संमदेन साकं वारणः प्रत्यरोधीति सहभावोक्तेः सहोक्तिरलंकारः ।

---

# समासोक्तिः

१–दिशामधीशांश्चतुरो यतः सुरानपास्य तं रागहृताः सिषेविरे ।
अवापुरारभ्य ततश्चला इति प्रवादमुच्चैरयशस्करं श्रियः ॥ १-४४

समेन कार्येण प्रस्तुतेऽप्रस्तुतव्यवहारसमारोपात् समासोक्तिः ।

२–स्पृशन्सशङ्कः समये शुचावपि स्थितः कराग्रैरसमग्रपातिभिः ।
अघर्मघर्मोदकबिन्दुमौक्तिकैरलञ्चकारास्य वधूरहस्करः ॥ १-५८

श्लिष्टविशेषणमूला समासोक्तिः ।

३–परस्य मर्माविधमुज्झतां निजं द्विजिह्वतादोषमजिह्मगामिभिः ।
तमिद्धमाराधयितुं सकर्णकैः कुलैर्न भेजे फणिनां भुजंगता ॥ १-६४

वस्तुनि वस्तुनो व्यवहारसमारोपात् समभेदकधर्ममूला समासोक्तिः ।

४–प्रहृत्य हेलया पादमुच्चैर्मूर्धसु विद्विषाम् ।
कथंकारमनालम्ब्य कीर्तिर्द्यामधिरोहति ॥ २-५२

अत्र प्रस्तुतकीर्तेरप्रस्तुतस्त्रीव्यवहारप्रतीतेः समासोक्तिः ।

५–आकर्षतेवोर्ध्वमपि क्रमीयानभ्युन्नतत्वात् कुचमण्डलेन ।
ननाम मध्योऽतिगुरुत्वभाजा नितान्तमाक्रान्त इवाङ्गनानाम् ॥ ३-१५

समभेदकधर्ममूला समासोक्तिः सा चोपमागर्भा ।

६–न लंघयामास महाजनानां शिरांसि नैवोद्धतिमाजगाम ।
अचेष्टताऽष्टापदभूमिरेणुः खुराहतो यत्सदृशं गरिम्णः ॥ ३-२८

स्फुटविशेषणमूलैकार्थप्रतिपादिका समासोक्तिः ।

७–कुतूहलेनेव जवादुपेतः प्राकारभित्या सहसा निषिद्धः ।
रसन्नरोदीद् भृशमम्बुवर्षव्याजेन यस्या वहिरम्बुवाहः ॥ ३-४१

अत्र प्रस्तुताम्बुवाहेऽप्रस्तुतव्यवहारसमारोपात् समासोक्ति ।

८–ऊर्मिभिस्तत्क्षणहीयमानरथ्याभुजाया वलयैरिवास्याः ।
प्रायेण निष्क्रामति चक्रपाणौ नेष्टं पुरो द्वारवतीत्वमासीत् ॥ ३-६६

द्वारकाया नवविधवाया व्यवहारप्रतीतेर्लिंगसाधारण्यमूलसमासोक्ति ।

९–आच्छादितायतदिगम्बरमुच्चकैर्गा-
माक्रम्य संस्थितमुदग्रविशालशृङ्गम् ।
मूर्ध्निस्खलत्तुहिनदीधितिकोटिमेन-
मुद्वीक्ष्य को भुवि न विस्मयते नगेशम् ॥ ४-१६

विशेषणसाम्यादौपम्यनिबन्धना समासोक्तिरत्र ।

१०–अयमतिजरठाः प्रकामगुर्वीरलघुविलम्बिपयोधरोपरुद्धाः ।
सततमसुमतामगम्यरूपाः परिणतदिक्करिकास्तटीर्बिभर्ति ॥ ४-२६

अत्र प्रकृतेऽप्रकृतवृद्धांगनाप्रतीते समासोक्तिः सा च विशेषणमूला ।

११–आसादितस्य तमसा नियतेर्नियोगा-
दाकाङ्क्षतः पुनरपक्रमणेन कालम् ।
पत्युस्त्विषामिह महौषधयः कलत्र-
स्थानं परैरनभिभूतममूर्भजन्ते ॥ ४-३४

प्रस्तुतेऽप्रस्तुतस्य साम्यप्रतीते- विशेषणमूलासमासोक्तिः ।

१२–अपशङ्कमङ्कपरिवर्तनोचिताश्चलिताः पुरः पतिमुपैतुमात्मजाः ।
अनुरोदितीव करुणेन पत्रिणां विरुतेन वत्सलतयैष निम्नगा. ॥ ४-४७

समलिंगमूला समासोक्तिः सा चोत्प्रेक्षानुप्राणिता ।

१३–भास्वत्करव्यतिकरोल्लसिताम्बरान्ताः
सापत्रपा इव महाजनदर्शनेन ।
संविव्युरम्बरविकासि चमूसमुत्थं
पृथ्वीरजः करभकण्ठकडारमाशाः ॥ ५-३

श्लेषवशादुभयार्थपादकतया श्लिष्टविशेषणमूला समासोक्तिः ।

१४–मद्योद्ग्रकुञ्जचरकुञ्जरगण्डकाष-
संक्रान्तदानपयसो वनपादपस्य ।
सेनागजेन मथितस्य निजप्रसूनै-
र्मम्ले यथागतमगामि कुलैरलीनाम् ॥ ५-४३

विशेषणसाम्यादापन्नाद्यौपम्यप्रतीतेः समासोक्तिः ।

१५–आजिघ्रति प्रणतमूर्धनि वाह्लिजेऽश्वे
तस्याङ्कसङ्गमसुखानुभवोत्सुकायाः ।
नासाविरोकपवनोल्लसितं तनीयो
रोमाञ्चतामिव जगाम रजः पृथिव्याः ॥ ५-५४

लिंगसाम्येन नायकनायिकाव्यवहारसमारोपात् समासोक्तिरलंकार. ।

१६–स्फुरदधीरतडिन्नयना मुहुः प्रियमिवागलितोरुपयोधरा ।
जलधरावलिरप्रतिपालितस्वसमया समयाज्जगतीधरम् ॥ ६-२५

जलधरावली नायिकात्वप्रतीतेरुपमागर्भा समासोक्तिः ।

१७–अभिमुखपतितैर्गुणप्रकर्षादविजितमुद्धतिमुज्ज्वलां दधानैः ।
तरुकिसलयजालमग्रहस्तैः प्रसभमनीयत भङ्गमङ्गनानाम् ॥ ७-२६

समेन कार्येण प्रस्तुतेऽप्रस्तुतव्यवहारसमारोपात् समासोक्तिः ।

१८–आनाभेः सरसि नतभ्रुवावगाढे
चापल्यादय पयसस्तरङ्गहस्तैः ।
उच्छ्रायि स्तनयुगमध्यरोहि लब्ध-
स्पर्शाना भवति कुतोऽथवा व्यवस्था ॥ ८-२२

रूपकगर्भा समभेदकधर्ममूला समासोक्तिरत्र ।

१९–गाम्भीर्यं दधदपि रन्तुमङ्गनाभिः
संक्षोभं जघनविघट्टनेन नीतः ।
अम्भोधिर्विकसितवारिजाननोऽसौ
मर्यादां सपदि विलङ्घयांबभूव ॥ ८-२६

श्लिष्टविशेषणमूला समासोक्तिः सा चातिशयोक्त्यनुप्राणिता ।

२०–नवकुङ्कुमारुणपयोधरया स्वकरावसक्तरुचिराम्बरया ।
अतिसक्तिमेत्य वरुणस्य दिशा भृशमन्वरज्यदतुषारकरः ॥ ९-७

व्यवहारसादृश्यप्रतीतेः श्लिष्टविशेषणमूला समासोक्तिः ।

२१–अनुरागवन्तमपि लोचनयोर्दधतं वपुः सुखमतापकरम् ।
निरकासयद्रविमपेतवसुं वियदालयादपरदिग्गणिका ॥ ९-१०

समलिङ्गमूला समासोक्तिः सा च रूपकगर्भा ।

२२–भवनोदरेषु परिमन्दतया शयितोऽलस- स्फटिकयष्टिरुच ।
अवलम्ब्य जालकमुखोपगतानुदतिष्ठदिन्दुकिरणान्मदनः ॥ ९-२९

समभेदकधर्ममूला समासोक्तिः सा चैकार्यप्रतिपादिका ।

२३–लीलयैव सुतनोस्तुलयित्वा गौरवाढ्यमपि लावण्यकेन ।
मानवञ्चनविदा वदनेन क्रीतमेव हृदयं दयितस्य ॥ १०-३८

प्रकृतेऽप्रकृतस्य व्यवहारसमारोपाद् विशेषणमूला समासोक्तिः ।

२४–यूनि रागतरलैरपि तिर्यक्पातिभिः श्रुतिगुणेन युतस्य ।
दीर्घदर्शिभिरकारि वधूनां लङ्घनं न नयनैः श्रवणस्य ॥ १०-४०

श्लिष्टविशेषणेन प्रस्तुतेऽप्रस्तुतव्यवहारसमारोपात् समासोक्तिः ।

२५–परिरम्भव्यतिकराद्वनितानामङ्गजेन पुलकेन बभूवे ।
प्रापि तेन भृशमुच्छ्वसिताभिर्नीविभिः सपदि बन्धनमोक्षः ॥ १०-५१

विशेषणसाम्याद् समभेदकधर्ममूला समासोक्तिः ।

२६–अम्बरं विनयतः प्रियपाणेर्योषितश्च करयोः कलहस्य ।
वारणामिव विधातुमभीक्ष्णं कक्ष्यया च वलयैश्च शिशिञ्जे ॥ १०-६२

अत्र प्रस्तुते स्त्रीपुरुषव्यवहारसमारोपात् समासोक्तिरलंकारः ।

२७–बाहुपीडनकचग्रहणाभ्यामाहतेन नखदन्तनिपातैः ।
बोधितस्तनुशयस्तरुणीनामुन्मिमील विशिखं विषमेषुः ॥ १०-७२

विशेषणसामर्थ्याद् प्रकृतेऽप्रकृतव्यवहारप्रतीतेः समासोक्तिः सा च शुद्धा ।

२८–कनधवलिमभेदैः कुङ्कुमेनेव किंचि-
न्मनयरहरजोभिर्भूषयन्पश्चिमाशाम् ।
हिमरुचिररुणिम्ना राजते रज्यमानै-
र्जरठकमलकन्दच्छेदगौरैर्मयूखैः ॥ ११-१४

अत्र प्रस्तुते नायकनायिकाव्यवहारसमारोपात् समासोक्तिः ।

२९–नवकुमुदवनश्रीहासकेलिप्रसङ्गा-
दधिकरुचिरशेषामप्युषां जागरित्वा ।

अयमपरदिशोऽङ्के मुञ्चति स्रस्तहस्तः
शिशयिषुरिव पाण्डु म्लानमात्मानमिन्दुः ॥ ११-२२

लिंगसाम्या समासोक्तिः सा चोत्प्रेक्षानुप्राणिता ।

३०–क्षणमयमुपविष्टः क्ष्मातलन्यस्तपादः
प्रणतिपरमवेक्ष्य प्रीतमह्नाय लोकम् ।
भुवनतलमशेषं प्रत्यवेक्षिष्यमाणः
क्षितिधरतटपीठादुत्थितः सप्तसप्तिः ॥ ११ ४८

प्रकृतार्कविशेषणवैभवादप्रकृतमहाराजप्रतीतेः समासोक्तिः ।

३१–युगपदयुगसप्तिस्तुल्यसंख्यैर्मयूखै-
र्दशनतदलभेदं कौतुकेनाशु कृत्वा ।
श्रियमलिकुलगीतैर्लालितां पङ्कजान्त-
र्भवनमधिशयानामादरात्पश्यतीव ॥ ११-६१

अत्र प्रकृते नायकनायिकाव्यवहार समारोपात् समासोक्तिरलंकारः

३२–उदयमिव कराग्रैरेष निष्पीड्य सद्यः
शशधरमहरादौ रागवानुष्णरश्मिः ।
अवकिरति नितान्तं कान्तिनिर्यासमच्छ-
स्नुतनवजलपाण्डु पुण्डरीकोदरेषु ॥ ११-६२

प्रकृते कार्यव्यवहारसमारोपात् समकार्यमूलासमासोक्तिः ।

३३–अतिरक्तभावमुपगम्य कृतमतिरमुष्य साहसे ।
दृष्टिरगणितभयासिलतामवलम्बते स्म समया सखीमिव ॥ १५-६

प्रकृतेऽप्रकृतनायिकाप्रतीतेरौपम्यनिबन्धनाश्लिष्टसमासोक्तिः ।

३४–मलिनं रणरेणुभिर्मुहुर्द्विषतां क्षालितमङ्गनाश्रुभिः ।
नृपमौलिमरीचिवर्णकैरथ यस्याङ्घ्रियुगं विलिप्यते ॥ १६-६२

अत्र प्रस्तुताङ्घ्रियुगेऽप्रस्तुत व्यवहारसमारोपात् समासोक्तिः ।

३५–युधि परैः सह दृढबद्धकक्षया कलक्वणन्मधुपकुलोपगीतया ।
मदीयत द्विपघटया सवारिभिः करोदरैः स्वयमथ दानमक्षयम् ॥ १७-२४

प्रस्तुतद्विपघटायामप्रस्तुतदानकर्तृ प्रतीते. श्लिष्टसमासोक्तिरलंकारः ।

३६–चलाङ्गुलीकिसलयमुद्धतैः करैरनृत्यत स्फुटकृतकर्णतालया ।
मदोदकद्रवकटभित्तिसङ्गिभिः कलस्वरं मधुपगणैरगीयत ॥ १७-२७

अत्र प्रकृतेऽप्रकृतव्यवहारसमारोपाद्रूपकगर्भा समासोक्तिः ।

३७–असिच्यत प्रशमितपांशुभिर्मही मदाम्बुभिर्घृतनवपूर्णकुम्भया ।
अवाद्यत श्रवणसुखं समुन्नमत्पयोधरध्वनिगुरुतूर्यमाननैः ॥ १७-२८

अत्र प्रकृतमदाम्बावप्रस्तुतव्यवहारसमारोपादौपम्यगा समासोक्ति. ।

३८–उदस्थिरे पवनविधूतवाससस्ततस्ततो गगनलिहश्च केतवः ।
यतः पुरः प्रतिरिपु शार्ङ्गिणः स्वयं व्यधीयत द्विपघटयेति मङ्गलम् ॥ १७-३६

अत्र प्रकृतेऽप्रकृतव्यवहारप्रतीतेरुपमागर्भा समासोक्तिः ।

३९–आक्रम्याजेरग्रिमस्कन्धमुच्चैरास्थायाथो वीतशङ्कं शिरश्च ।
हेलालोला वर्त्म गत्वातिमर्त्यं द्यामारोहन्मानभाजः सुखेन ॥ १८-१४

प्रस्तुतेऽप्रस्तुतव्यवहारसमारोपात् समकार्यमूला समासोक्तिः ।

४०–सद्वंशत्वादङ्कसंसङ्गिनीत्वं नीत्वा कामं गौरवेणाववद्धा ।
नीता हस्तं वञ्चयित्वा परेण द्रोहं चक्रे कस्यचित्स्वा कृपाणी ॥ १८-१६

श्लिष्टौपम्येन प्रकृतेऽप्रकृतव्यवहारप्रतीते. समासोक्तिः ।

४१–अभग्नवृत्ताः प्रसभादाकृष्टा यौवनोद्धतैः ।
चक्रन्दुरुच्चकैर्मुष्टिग्राह्यमध्या धनुर्लताः ॥ १९-३१

अत्र प्रकृतधनुर्लतायामप्रकृतसादृश्यव्यवहारादौपम्यगा समासोक्तिः ।

४२–अपूर्वयेव तत्कालसमागमससकामया ।
दृष्टेन राजन् वपुषा कटाक्षैर्विजयश्रिया ॥ १९-८५

अत्र प्रकृतेऽप्रकृतमानिनीप्रतीतेः शुद्धा समासोक्तिः ।

४३–नियोक्ष्यमाणेन पुनः कर्मण्यतिगरीयसि ।
आरोप्यमाणोऽगुरुं भर्त्रा कार्मुकमानमत् ॥ १९-९१

अत्र प्रकृते नियोज्यपुरुषप्रतीतेः कार्यसाम्यात् समासोक्तिः ।

४४–अभिवीक्ष्य विदर्भराजपुत्रीकुचकाश्मीरजचिह्नमच्युतोरः ।
चिरसञ्चितयापि चेदिराजः सहसावाप रुषा तदैव योगम् ॥ २०-६

अत्र प्रस्तुतयोगेऽप्रस्तुतव्यवहारसमारोपाच्छुद्धा समासोक्तिः ।

४५–ऋजुताफलयोगशुद्धिभाजां गुरुपक्षाश्रयिणां शिलीमुखानाम् ।
गुणिना नतिमागतेन सन्धिः सह चापेन समञ्जसो बभूव ॥ २०-९

विशेषणसामर्थ्यात् प्रकृतेऽप्रकृतव्यवहारसमारोपे समासोक्तिः ।

४६–अविपह्यतमे कृताऽधिकारं वशिना कर्मणि चेदिपार्थिवेन ।
अरसद्धनुरुच्चकैर्दृढातिप्रसभाकर्षणवेपमानजीवम् ॥ २०-१०

अत्र प्रस्तुतधनुषि अप्रस्तुतप्रतीतेः कार्यसाम्यात् समासोक्तिः ।

४७–दयितैरिव खण्डिता मुरारेर्विशिखैः संमुखमुज्ज्वलाङ्गलेखैः ।
लघिमानमुपेयुषी पृथिव्यां विफला शत्रुशराऽवलिः पपात ॥ २०-२४

अत्र प्रस्तुतशरावलावप्रस्तुतव्यवहारसमारोपादुपमागर्भा समासोक्तिः ।

४८–सरितः प्रसृतेन नीयमानः शरवर्षैरवसादमाश्रयाऽऽस्त्रः ।
प्रदलेषु कृती चकार विद्युद्व्यपदेशेन घनेष्वनुप्रवेशम् ॥ २०-७२

समकार्येण प्रस्तुतेऽप्रस्तुतव्यवहारसमारोपात् शुद्धा समासोक्तिः ।

---

# परिकरः

१–मुहुः प्रतिस्खलितपराङ्मुखा युधि स्ववीर्यभीरुचलनितम्बनिर्भराः ।
अदंशयन्नरहितशौर्यदंशनास्तनूरयं नय इति वृष्णिसूनवः ॥ १७-२१

अत्र प्रकृतार्थोपकारकचमत्कारव्यञ्जके विशेषणे परिकरालंकारः ।

---

# अर्थश्लेषः

१–अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना ।
शब्दविद्येव नो भाति राजनीतिरपस्पशा ॥ २-११२

अत्र सद्वृत्तिः सन्निबन्धनेत्यर्थद्वयस्य कथनादर्थश्लेषः ।

२–यस्यामजिह्मा महतीमपङ्काः सीमानमत्यायतयोऽत्यजन्तः ।
जनैरजातस्खलनैर्न जातु द्वयेऽप्यमुच्यन्त विनीतमार्गाः ॥ ३-५७

अत्र मार्गशब्देनैव वृत्तादनन्विपथद्वयवदर्थद्वयप्रतीतेरर्थश्लेषः ।

३-प्रावर्त्तिन शुभफलप्रदशुक्तियुक्ता सम्पन्नदेवमणयो भृतरन्ध्रभागाः ।
अश्वाः प्रथुवंसुमतीमतिरोचमानास्तूर्णंपयोधय इवोर्मिभिरापतन्तः।५-४

एकनालावलम्बिफलद्वयवदेकशब्देनार्थद्वयप्रतीतेरर्थश्लेषः ।

४-गण्डोज्ज्वलामुज्ज्वलनाभिचक्रया विराजमाना नवयोदरश्रिया ।
कश्चित्सुखं प्राप्तुमनाः सुसारथी रथीं युयोजाऽविधुरां वधूमिव ॥ १२-८

अत्र नाभिचक्रया उदरश्रिया इति एकशब्देनार्थद्वयप्रतीते. अर्थश्लेषः ।

५-अहितादनपत्रपस्त्रसन्नतिमात्राज्जिमतभीरनास्तिक. ।
विनयोपहितस्त्वया कृतः सदृशोऽन्योगुणवानविस्मयः ॥ १६-७

अत्राऽहितादित्येकशब्देनार्थद्वयप्रतीतेरर्थश्लेषः ।

६-विहिताऽपचितिर्महीभुजा द्विषतामाहितसाध्वसो बलः ।
भव सानुचरस्त्वमुच्चकैर्महतामप्युपरि क्षमाभृताम् ॥ १६-८

अत्र सानुचर इति शब्देनार्थद्वयप्रतीतेरर्थश्लेष. ।

७-विकचोत्पलचारुलोचनस्तव चैद्येन घटामुपेयुपः ।
यदुपुङ्गव बन्धुगौरवादपि पाता ससुरो नवासव ॥ १६-१२

विकचोत्पलचारुलोचन.इति शब्देनार्थद्वयप्रतीतेरर्थश्लेषः ।

८-चलिताऽनकदुन्दुभिः पुरः सबलस्त्वं सहसारणेन तम् ।
समितौ रभसादुपागतं सगदः सम्प्रतिपत्तुमर्हसि ॥ १६-१३

सबलः सगद इति शब्दाभ्यां अर्थद्वयप्रतीतेरर्थश्लेषः ।

# अर्थान्तरन्यासः

१–तमर्घ्यमर्घ्यादिकयाऽऽदिपूरुषः सपर्यया साधु स पर्यपूपुजत् ।
गृहानुपैतुं प्रणयादभीप्सवो भवन्ति नापुण्यकृता मनीषिणः ॥ १-१

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास. ।

२–विधाय तस्यापचितिं प्रसेदुषः प्रकाममप्रीयत यज्वनां प्रियः ।
ग्रहीतुमार्यान्परिचर्यया मुहुर्महानुभावा हि नितान्तमर्थिनः ॥ १-१७

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

३–विलोकनेनैव तवामुना मुने ! कृतः कृतार्थोऽस्मि निबर्हितांहसा ।
तथापि शुश्रूषुरहं गरीयसीर्गिरोऽथवा श्रेयसि केन तृप्यते ॥ १-२६

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

४–अमानवं जातमजं कुले मनोः प्रभाविनं भाविनमन्तमात्मनः ।
मुमोच जानन्नपि जानकी न यः सदाभिमानैकधना हि मानिनः ॥१-६७

अत्र कारणेन कार्यसमर्थरूपोऽर्थान्तरन्यासः ।

५–बलावलेपादधुनाऽपि पूर्ववत्प्रबाध्यते तेन जगज्जिगीषुणा ।
सतीव योषित्प्रकृतिः सुनिश्चला पुमांसमभ्येति भवान्तरेष्वपि ॥ १-७२

अत्रोपमोपमेयपुरस्कृतोऽर्थान्तरन्यास. ।

६–तदेनमुल्लङ्घितशासनं विधेर्विधेहि कीनाशनिकेतनातिथिम् ।
शुभेतराचारविपक्त्रिमापदो विपादनीया हि सतामसाधव. ॥ १-७३

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

७–मम तावन्मतमिदं श्रूयतामङ्ग ! वामपि ।
ज्ञातसारोऽपि खल्वेकः सन्दिग्धे कार्यवस्तुनि ॥२-१२

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

८–यावदर्थपदां वाचमेवमादाय माधवः ।
विरराम महीयांसः प्रकृत्या मितभाषिणः ॥२-१३

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

९–म्रियते यावदेकोऽपि रिपुस्तावत्कुतः सुखम् ।
पुरः क्लिश्नाति सोमं हि सैंहिकेयोऽसुरद्रुहाम् ॥२-३५

अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ।

१०–उपकर्त्रारिणा सन्धिर्न मित्रेणापकारिणा ।
उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः ॥२-३७

अत्र कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः ।

११–त्वया विप्रकृतश्चैद्यो रुक्मिणीं हरता हरे !
बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः ॥२-३८

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

१२–आलप्यालमिदं बभ्रोर्यत्स दारानपाहरत् ।
कथापि खलु पापानामलमश्रेयसे यतः ॥२-४०

अत्र कार्येण कारणसमर्थकोऽर्थान्तरन्यासः ।

१३–तेजस्विमध्ये तेजस्वी दवीयानपि गण्यते ।
पञ्चमः पञ्चतपसस्तपनो जातवेदसाम् ॥२-५१

अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ।

१४–यजतां पाण्डवः स्वर्गमवत्विन्द्रस्तपत्विनः ।
वयं हनाम द्विषतः सर्वं स्वार्थं समीहते ॥२-६५

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

१५–उपायमास्थितस्यापि नश्यन्त्यर्थाः प्रमाद्यतः ।
हन्ति नोपशयस्थोऽपि शयालुर्मृगयुर्मृगान् ॥२-८०

विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ।

१६–मृदुव्यवहितं तेजो भोक्तुमर्थान्प्रकल्पते ।
प्रदीपः स्नेहमादत्ते दशयाऽभ्यन्तरस्थया ॥२-८५

विशेषेण सामान्यसमर्थनादर्थान्तरन्यासः ।

१७–बृहत्सहाय कार्यान्तं क्षोदीयानपि गच्छति ।
सम्भूयाम्भोधिमभ्येति महानद्या नगापगा ॥२-१००

अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ।

१८–विहसमाणाः प्रतिरस्यमीयुर्मुरारिमारादनघं जनौघाः ।
अनेकशः संस्तुतमप्यनल्पा नवं नवं प्रीतिरहो करोति ॥३-३१

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

१९–दृष्टोऽपि शैलः स मुहुर्मुरारेरपूर्ववद्विस्मयमाततान ।
क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः ॥४-१७

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

२०–आयस्तमैक्षत जनश्चटुलाग्रपादं
गच्छन्तमुच्चलितचामरचारमश्वम् ।

नागं पुनर्मृदु सलीलनिमीलिताक्षं
सर्वः प्रियः खलु भवत्यनुरूपचेष्टः ॥५-६

सामान्यद्वारा विशेषसमर्थनरूपेणार्थान्तरन्यासः।

२१–छायामपास्य महतीमपि वर्तमाना-
मागामिनी जगृहिरे जनतास्तरूणाम्।
सर्वो हि नोपगतमप्यपचीयमानं
वर्धिष्णुमाश्रयमनागतमभ्युपैति ॥५-१४

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

२२–दृष्ट्वैव निर्जितकलापभरामधस्ताद्-
व्याकीर्णमाल्यकबरां कबरीं तरुण्याः।
प्रादुद्रुवत् सपदि चन्द्रकवान् द्रुमाग्रात्
संघर्षिणा सह गुणाभ्यधिकैर्दुरासम् ॥५-१६

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

२३–दानं ददत्यपि जलैः सहसाधिरूढे
को विद्यमानगतिरासितुमुत्सहेत।
यद्दन्तिनः कटकटाहतटान्मिमङ्क्षो-
र्मङ्क्षूदपाति परितः पटलैरलीनाम् ॥५-३७

विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः।

२४–प्रत्यन्यदन्ति निशिताङ्कुशदूरभिन्न-
निर्याणनिर्यदसृजं चलितं निषादी।

रोद्धुं महेभमपरिव्रहिमानमागा-
दाक्रान्तितो न वशमेति महान् परस्य ॥५-४१

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

२५–सेव्योऽपि सानुनयमाकलनाय यन्त्रा
नीतेन वन्यकरिदानकृताधिवासः ।
नामाजि केवलमभाजि गजेन शाखी
नान्यस्य गन्धमपि मानभृतः सहन्ते ॥५-४२

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

२६–नोच्चैर्यदा तरुतलेषु ममुस्तदानी-
माधोरणैरभिहिताः पृथुमूलशाखाः ।
बन्धाय चिच्छिदुरिभास्तरसात्मनैव
नैवात्मनोनमयथा क्रियते मदान्धैः ॥५-४४

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

२७–निर्धूतवीतमपि बालकमुल्ललन्तं
यन्ता क्रमेण परिसान्त्वनतर्जनाभिः ।
शिक्षावशेन शनकैर्वशमानिनाय
शास्त्रं हि निश्चितधियां क्व न सिद्धिमेति ॥५-४७

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

२८–जगति नैशमशीतकरः करैर्वियति वारिदवृन्दमयं तमः ।
जलजराजिषु नैद्रमदिद्रवन्न महतामहृताः क्व च नारयः ॥६-४३

वैधर्म्येण सामान्याद् विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

२६—तनुरुहाणि पुरो विजितध्वनेर्धवलपक्षविहंगमकूजितैः ।
जगलुरक्षमयेव शिखण्डिनः परिभवोऽरिभवो हि सुदुःसहः ॥६-४५

कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः ।

३०—उपचितेषु परेष्वसमर्थतां व्रजति कालवशाद्बलवानपि ।
तपसि मन्दगभस्तिरभीषुमान्न हि महाहिमहानिकरोऽभवत् ॥६-६३

विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ।

३१—अनुगिरमृतुभिर्वितायमानामथ स विलोकयितुं वनान्तलक्ष्मीम् ।
निरगमदभिराद्धुमादृतानां भवति महत्सु न निष्फलः प्रयासः ॥७-१

सामान्यविशेषकार्यकारणभावसमर्थनादर्थान्तरन्यासः ।

३२—उपवनपवनानुपातदक्षैरलिभिरलाभि यदङ्गनाजनस्य ।
परिमलविषयस्तदुन्नतानामनुगमने खलु संपदोऽग्रतःस्थाः ॥७-२७

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

३३—अवनतवदनेन्दुरिच्छतीव व्यवधिमधीरतया यदस्थितास्मै ।
अहरत सुतरामतोऽस्य चेतः स्फुटमभिभूषयति स्त्रियस्त्रपैव ॥७-३८

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

३४—इति वदति सखीजने निमीलद्द्विगुणितसान्द्रतराक्षिपक्ष्ममाला ।
अपतदलिभयेन भर्तुरङ्कं भवति हि विक्लवता गुणोऽङ्गनानाम् ॥७-४३

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

३५—इदमिदमिति भूरुहां प्रसूनैर्मुहुरनिलोमयता पुरःपुरोऽन्या ।
अनुरहसमनायि नायकेन त्वरयति रन्तुमहो जनं मनोभूः ॥७-५०

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

३६–अधिरजनि जगाम धाम तस्याः प्रियतमयेति रुषा रुजावनद्धः ।
पदमपि चलितुं युवा न सेहे किमिव न शक्तिहरं ससाध्वसानाम् ।७-१२

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

३७–अवचितकुसुमा विहाय वल्लीर्युवतिषु कोमलमाल्यमालिनीषु ।
पदमुपदधिरे कुलान्यलीनां न परिचयो मलिनात्मनां प्रधानम् ।७-६१

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

३८–मुहुरिति वनविभ्रमाभिषङ्गादतमि तदा नितरां नितम्बिनीभिः ।
मृदुतरतनवोऽलसाः प्रकृत्या चिरमपि ताः किमुत प्रयासभाजः ।७-६८

कारणेन कार्यस्य समर्थनरूपोऽर्थान्तरन्यासः ।

३९–गच्छन्तीरलसमवेक्ष्य विस्मयिन्य-
स्तास्तन्वीर्न विदधिरे गतानि हंस्यः ।
बुद्ध्वा वा जितमपरेण काममावि-
ष्कुर्वीत स्वगुणमपत्रपः क एव ॥८-७

गतिकरणनिषेधसमर्थनार्थोऽयमर्थान्तरन्यासः ।

४०–आघ्राय श्रमजननिन्द्यगन्धबन्धुं
निःश्वासश्वसनमसक्तमङ्गनानाम् ।
मारुत्याः सुमनस ईषिरे न भृङ्गै-
रौचित्यं गणयति को विशेषकामः ॥८-१०

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

४१–आलापैस्तुलितरवाणि माधवीनां
माधुर्यादमलपतत्रिणां कुलानि ।

अन्तर्धामुपययुरुत्पलावलीषु
प्रादुष्यात्क इव जितः पुरः परेण ॥८-१२

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

४२–संक्षोभं पयसि मुहुर्महेभकुम्भश्रीभाजा कुचयुगलेन नीयमाने ।
विश्लेषं युगमगमद्रथाङ्गनाम्नोरुद्वृत्तः क इव सुखावहः परेषाम् ॥८-१८

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

४३–नेच्छन्ती सममुना सरोऽवगाढुं
रोधस्तः प्रतिजलमीरिता सखीभिः ।
आश्लिक्षद्भयचकितेक्षणं नवोढा
वोढारं विपदि न दूषितातिभूमिः ॥८-२०

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

४४–आनाभेः सरसि नतभ्रुवावगाढे
चापल्यादथ पयसस्तरङ्गहस्तैः ।
उच्छ्रायि स्तनयुगमध्यरोहि लब्ध-
स्पर्शानां भवति कुतोऽथवा व्यवस्था ॥८-२२

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

४५–उन्निद्रप्रियकमनोरमं रमण्याः
संरेजे सरसि वपुः प्रकाशमेव ।
मुक्तानां विमलतया तिरस्क्रियायै
नाक्रामत्यपि हि भवन्त्यल जलौघः ॥८-२८

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

४६–आवद्धप्रचुरपरार्घ्यकिंकिणीको
रामाणामनवरतोदगाहभाजाम् ।
नारावं व्यतनुत मेखलाकलापः
कस्मिन्वा सजलगुणे गिरां पटुत्वम् ॥८-४५

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

४७–मारूढः पतित इति स्वसंभवोऽपि
स्वच्छाना परिहरणीयतामुपैति ।
कर्णोन्यदच्युतमसितोत्पल वधूनां
वीचीभिस्तटमनु यन्निरामुरापः ॥८-५४

विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ।

४८–दन्तानामधरमयावकं पदानि
प्रत्यग्रास्तनुभविलेपनां नखाङ्काः ।
म्लानिम्युः श्रियमधितोयमङ्गनानां
शोभायै विपदि सदाश्रिता भवन्ति ॥८-५५

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

४९–वक्षोभ्यो घनमनुलेपनं यदूना-
मुत्तंसानहरत वारि मूर्धजेभ्यः ।
नेत्राणां मदरुचिरक्ततैव तस्थौ
चक्षुष्यः खलु महतां परैरलङ्घ्यः ॥८-५७

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

५०–यो बाह्यः स खलु जलैर्निरासि रागो
यश्चित्ते स तु तदवस्थ एव तेषाम् ।

धीराणां व्रजति हि सर्व एव नान्तः
पातित्वादभिभवनीयतां परस्य ॥८-५८

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

५१–अद्यद्भिर्जलमभि भूषणैर्वधूना-
मङ्गेभ्यो गुरुभिरमज्जि लज्जयेव।
निर्माल्यैरथ ननृतेऽवधीरिताना-
मप्युच्चैर्भवति लघीयसां हि धार्ष्ट्यम् ॥८-६०

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

५२–सीमन्तं निजमनुबध्नती कराभ्या-
मालक्ष्य स्तनतटबाहुमूलभागा।
भर्त्रान्या मुहुरभिलप्यता निदध्ये
नैवाहो विरमति कौतुकं प्रियेभ्यः ॥८-६६

सामान्येन विशेषसमर्थनरूपोऽयमर्थान्तरन्यासः।

५३–उपसन्ध्यमास्त तनु सानुमतः शिखरेषु तत्क्षणमशीतरुचः।
करजालमस्तसमयेऽपि सतामुचितं खलूच्चतरमेव पदम् ॥९-५

सामान्येनात्र विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

५४–प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥९-६

विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः।

५५–अविभाव्यतारकमदृष्टहिमद्युतिबिम्बमस्तमितभानु नभः।
अवसन्नतापमतमिस्रमभादपदोषतैव विगुणस्य गुणः ॥९-१२

कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः।

५६–निलयः श्रियः सततमेतदिति प्रथितं यदेव जलजन्म तया ।
दिवसात्ययात्तदपि मुक्तमहो चपलाजनं प्रति न चोद्यमदः ॥६-१६

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास ।

५७–ददृशेऽपि भास्करस्चाह्नि न य स तमी तमोभिरभिगम्य तताम् ।
द्युतिमग्रहीद्ग्रहगणो लघवः प्रकटीभवन्ति मलिनाश्रयतः ॥६-२३

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास. ।

५८–प्रथमं कलाभवदथार्धमयो हिमदीधितिर्महदभूदुदितः ।
दधति ध्रुव क्रमश एव न तु द्युतिशालिनोऽपि सहसोपचयम् ॥६-२६

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

५९–रजनीमवाप्य रुचमाप शशी सपदि व्यभूषयदसावपि ताम् ।
अविलम्बितक्रममहो महतामितरेतरोपकृतिमच्चरितम् ॥६-३३

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

६०–इति निश्चितप्रियतमागतयः सितदीधितावुदयवत्यबलाः ।
प्रतिकर्म कर्तुमुपचक्रमिरे समये हि सर्वमुपकारि कृतम् ॥६-४३

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास. ।

६१–सममेकमेव दधतुः सुतनोरुरहारभूषणमुरोजतटौ ।
घटते हि संहततया जनितामिदमेव निर्विवरतां दधतोः ॥६-४४

सामान्येन विशेषसमर्थनरूपोऽप्यमर्थान्तरन्यासः ।

६२–वपुरन्वलिप्त परिरम्भसुखव्यवधानभीरुकतया न वधूः ।
क्षममस्य बाढमिदमेव हि यत्प्रियसंगमेष्वनवलेपमदः ॥६-५१

सामान्येन विशेषसमर्थनरूपोऽप्यमर्थान्तरन्यासः ।

६३–दयिताय मानपरयाऽपरया त्वरितं ययावगदितापि सखी ।
किमु चोदिताः प्रियहितार्थकृत कृतिनो भवन्ति सुहृदः सुहृदां ॥६-५७

सामान्येन विशेषसमर्थनरूपोऽयमर्थान्तरन्यासः ।

६४–श्रुवते स्म दूत्य उपसृत्य नरान्नरवत्प्रगल्भमतिगर्भगिरः ।
सुहृदर्थमीहितमजिह्मधियां प्रकृतेर्विराजति विरुद्धमपि ॥६-६२

सामान्येन विशेषसमर्थनरूपोऽयमर्थान्तरन्यासः ।

६५–वियतां निपेवितमपक्रियया समुपैति सर्वमिति सत्यमदः ।
अमृतत्स्तोऽपि विरहाद्भवतो यदमूं दहन्ति हिमरश्मिरुचः ॥६-६८

विशेषेण सामान्यसमर्थनरूपोऽयमर्थान्तरन्यासः ।

६६–उदितं प्रिया प्रति सहार्दमिति श्रदधीयत प्रियतमेन वचः ।
विदितेङ्गिते हि पुर एव जने सपदीरिताः खलु लगन्ति गिरः ॥६-६९

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

६७–विम्बितं मृतपरिस्रुति जानन् भाजने जलजमित्यबलायाः ।
घ्रातुमक्षि पतति भ्रमरः स्म भ्रान्तिभाजि भवति क्व विवेकः ॥१०-५

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

६८–या कथंचन सखीवचनेन प्रागभि प्रियतमं प्रजगल्भे ।
व्रीडजाड्यमभजन्मधुपा सा स्वां मदात्प्रकृतिमेति हि सर्वः ॥१०-१८

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

६९–मा पुनस्तमभिसीसरमागस्कारिणं मदविमोहितचित्ता ।
योपिदित्यभिललाप न हाला दुस्त्यजः खलु सुखादपि मानः ॥१०-२१

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

७०–अन्ययान्यवनितागतचित्तं चित्तनाथमभिशङ्कितवत्या ।
पीतभूरिसुरयापि न मेदे निर्वृतिर्हि मनसो मदहेतुः ॥१०-२८

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

७१–शङ्कयान्ययुवतौ वनिताभिः प्रत्यभेदि दयितः स्फुटमेव ।
न क्षमं भवति तत्त्वविचारे मत्सरेण हृतसंवृतिचेतः ॥१०-३५

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

७२–यद्यदेव रुरुचे रुचिरेभ्यः सुभ्रुवो रहसि तत्तदकुर्वन् ।
आनुकूलिकतया हि नराणामाक्षिपन्ति हृदयानि तरुण्यः ॥१०-७६

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

७३–व्रजति विषयमक्ष्णामंशुमाली न याव-
त्तिमिरमखिलमस्तं तावदेवारुणेन ।
परपरिभवि तेजस्तन्वतामाशु कर्तुं
प्रभवति हि विपक्षोच्छेदमग्रेसरोऽपि ॥११-२५

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

७४–वदनितयमवादीर्यन्मम त्वं प्रियेति
प्रियजनपरिभुक्तं यद्दुकूलं दधानः ।
मदधिवसतिमागाः कामिनां मण्डनश्री-
र्व्रजति हि सफलत्वं वल्लभालोकनेन ॥११-३३

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

७५–इति कृतवचनायाः कश्चिदभ्येत्य बिभ्य-
द्गलितनयनवारेर्याति पादावनामम् ।

करुणमपि समर्थं मानिनां मानभेदे
रुदितमुदितमस्त्रं योषितां विग्रहेषु ॥११-३५

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

७६—अवतमसभिदायै भास्वताभ्युद्गतेन
प्रसभमुडुगणोऽसौ दर्शनीयोऽप्यपास्तः।
निरसितुमरिमिच्छोर्ये तदीयाश्रयेण
श्रियमधिगतवन्तस्तेऽपि हन्तव्यपक्षे ॥११-५७

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

७७—बहिरपि विलसन्त्यः काममानिन्यिरे य-
द्दिवसकररुचोऽन्तं ध्वान्तमन्तर्गृहेषु।
नियतविषयवृत्तेरप्यनल्पप्रताप-
क्षतसकलविपक्षस्तेजसः स स्वभावः ॥११-५९

अत्र समर्थ्यसमर्थकयोः सामान्यविशेषाभावादर्थान्तरन्यासः।

७८—कुमुदवनमपश्रि श्रीमदम्भोजखण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिलसितानां ही विचित्रो विपाकः ॥११-६४

अत्र कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः।

७९—अप्यध्वमास्थवतैव केनचित्प्रतीक्षमाणेन जनं मुहुर्धृतः।
दास्यं हि सद्य.फलदं यदग्रतश्चखाद दासेरयुवा वनावली. ॥१२-३२

अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः।

८०–सावज्ञमुन्मील्य विलोचने सकृत्क्षणं मृगेन्द्रेण सुषुप्सुना पुनः ।
सैन्याश्च यातः समयापि विव्यथे कथं सुराजंभवमन्ययाथवा ।।१२-५२

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

८१–व्रजतोरपि प्रणयपूर्वमेकतामसुरारिपाण्डुसुतसैन्ययोस्तदा ।
ददृशे विपाणिभिरनुक्षणं मियो मदमूढबुद्धिषु विवेकिता कुतः ।।१२-६

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

८२–रथवाजिपत्तिकरिणीसमाकुलं
तदनीकयोः समगत इव मिथः ।
दधिरे पृथक्करिण एव दूरतो
महतां हि सर्वमथवा जनातिगम् ।।१३-१७

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

८३–हरिराकुमारमखिलाभिधानवित्स्वजनस्य वार्तमयमन्वयुङ्क्त च ।
महतीमपि श्रियमवाप्य विस्मयः सुजनो न विस्मरति जातु किंचन ।१३-६८

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

८४–अथ तत्र पाण्डुतनयेन सदसि विहितं मुरद्विषः ।
मानममहृत न चेदिपतिः परवृद्धिमत्सरि मनो हि मानिनाम् ।।१५-१

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

८५–कटुनापि चैद्यवचनेन विकृतिमगमन्न माधवः ।
सत्यनियतवचसं वचसा सुजनं जनाश्चलयितुं क ईशते ।।१५-४०

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

८६–न च तं तदेति शपमानमपि यदुनृपाः प्रचुक्रुधुः ।
शौरिसमयनिगृहीतधियः प्रभुचित्तमेव हि जनोऽनुवर्तते ॥१५-४१

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

८७–स्तुतिविरम तस्य न समस्तमपकृतमियाय विद्विषः ।
स्तवुमधिगतगुणास्मरणाः पटवो न दोषमखिलं खलूत्तमाः ॥१५-४३

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

८८–म्रियमाणमप्यगलदश्रु चलति दयिते नतभ्रुवः ।
स्नेहनकृतकरसं दधतामिदमेव युक्तमतिमुग्धचेतसाम् ॥१५-८६

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

८९–कुशलं खलु तुभ्यमेव तद्वचनं कृष्ण यदभ्यधामहम् ।
उपदेशपराः परेष्वपि स्वविनाशाभिमुखेषु साधवः ॥१६-४१

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

९०–अनपेक्ष्य गुणागुणौ जनः स्वरुचि निश्चयतोऽनुधावति ।
अपहाय महीशमार्चितत्सदसि त्वां ननु भीष्मनूर्वजः ॥१६-४४

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

९१–ध्रियते धवलः खलूच्चकैर्धवलैरेव सितेतरैरधः ।
शिरसौघमधत्त शंकरः सुरसिन्धोर्मधुजित्तमङ्घ्रिणा ॥१६-४६

विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ।

९२–हरेरपि प्रति परकीयवाहिनीरविस्यदं प्रववृतिरे चमूचराः ।
विलम्बितुं न खलु सहा मनस्विनो विधित्सतः कलहमवेक्ष्य विद्विषः ।१७-५०

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

६३–सुसंहृतैर्दधदपि धाम नीयते तिरस्कृतिं बहुभिरसंशयं परैः ।
यतः क्षितेरवयवसंपदोऽणवस्त्विषां निधेरपि वपुरावरीषत ॥१७-५६

विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ।

६४–कुन्तेनोच्चैः सादिना हन्तुमिष्टान्नाजानेयो दन्तिनस्त्रस्यति स्म ।
कर्मोदारं कीर्तये कर्तुकामान्किवा जात्याः स्वामिनो ह्रेपयन्ति ॥१८-२३

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

६५–कश्चिच्छस्त्रापातमूढोऽपवोढुर्लब्ध्वा भूयश्चेतनामाहवाय ।
व्यावर्तिष्ट क्रोशतः सख्युरुच्चैस्त्यक्तप्रात्मा का च लोकानुवृत्तिः ॥१८-६४

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

६६–भिन्नानस्त्रैर्मोहभाजोऽभिजातान्हन्तुं लोलं वारयन्तः स्ववर्गम् ।
जीवग्राहं ग्राहयामासुरन्ये योग्येनार्थः कस्य न स्याज्जनेन ॥१८-६६

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

६७–दृष्ट्वं कृत्वार्थं पत्रिणः शार्ङ्गपाणे-
रैत्याधोमुख्यं प्राविशन्भूमिमाशु ।
युद्धया मुक्तानां वैरिवर्गस्य मध्ये
भर्त्रा क्षिप्तानामेतदेवानुरूपम् ॥१९-११९

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

६८–व्यगमन्सहसा दिशा मुखेभ्यः शमयित्वा शिखिनं घनाघनौघाः ।
उपकृत्य निसर्गतः परेषामुपरोधं न हि कुर्वते महान्तः ॥२०-७४

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

---

# अप्रस्तुतप्रशंसा

१–उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता ।
समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च ॥ २-१०

अत्र पर इति शब्देन शत्रुविशेषप्रतीतेरप्रस्तुतप्रशंसा सा च श्लिष्ट-विशेषणविशेष्यनिबन्धना ।

२–पादाहतं यदुत्थाय मूर्धानमधिरोहति ।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥ २-४६

अत्रास्मदपेक्षया रजोऽपि वरमिति प्रतीतेरप्रस्तुतप्रशंसा सा च शुद्धसारूप्यनिबन्धना ।

३–तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत् ।
हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम् ॥ २-४९

अत्राप्रस्तुते प्रस्तुतप्रतीतेर्वाच्यार्थसम्भवाप्रस्तुतप्रशंसा ।

४–अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः ।
केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः ॥ २-५३

अत्राप्रस्तुते प्रस्तुतार्थप्रतीतेः शुद्धसारूप्यनिबन्धनाऽप्रस्तुतप्रशंसा ।

५–सुकुमारमहो लघीयसां हृदयं तद्गतमप्रियं यतः ।
सहसैव समुद्गिरन्त्यमी जरयन्त्येव हि तन्मनीषिणः ॥१६-२१

अप्रस्तुतात्सामान्यात् प्रस्तुतविशेषप्रतिपत्तेरप्रस्तुतप्रशंसा ।

६–उपकारपरः स्वभावतः सततं सर्वजनस्य सज्जनः ।
असतामनिशं तथाप्यहो गुरुहृद्रोगकरी तदुन्नतिः ॥१६-२२

अप्रस्तुतेन प्रस्तुतहरिश्चैद्यावेवं भूताविति प्रतीतेरप्रस्तुतप्रशंसा ।

७–परितप्यत एव नोत्तमः परितप्तोऽप्यपरः सुसंवृतिः ।
परवृद्धिभिराहितव्यथः स्फुटनिर्भिन्नदुराशयोऽधमः ॥१६-२३

चैद्यश्चाधमो हरिस्तूत्तम इति प्रतीतेरप्रस्तुतप्रशंसा ।

८–अनिराकृततापसंपदं फलहीनां सुमनोभिरुज्झिताम् ।
खलतां खलतामिवासतीं प्रतिपद्येत कथं बुधो जनः ॥१६-२४

स खलतां प्रतिपद्यते, न चैव हरिरिति प्रतीतेरप्रस्तुतप्रशंसा ।

९–जितरोषरया महाधियः सपदि क्रोधजितो लघुर्जनः ।
विजितेन जितस्य दुर्मतेर्मतिमद्भिः सह का विरोधिता ॥१६-२६

मूर्खश्चायं चैद्य इत्यप्रस्तुतात्सामान्याद्विशेषप्रतीतेरप्रस्तुतप्रशंसा ।

१०–वचनैरसतां महीयसो न खलु व्येति गुरुत्वमुद्धतैः ।
किमपैति रजोभिरौर्वरैरवकीर्णस्य मणेर्महार्घता ॥१६-२७

महीयस इति सामान्याद्धरेरिति विशेषप्रतीतेरप्रस्तुतप्रशंसा ।

११–परितोषयिता न कश्चन स्वगतो यस्य गुणोऽस्ति देहिनः ।
परदोषकथाभिरल्पकः स्वजनं तोषयितुं किलेच्छति ॥१६-२८

अत्र प्रस्तुतचैद्यस्यापि निर्गुणत्वात्परदूषणं युक्तमिति प्रतीतेः सारूप्यात्सुद्धाप्रस्तुतप्रशंसा।

१२–सहजान्धदृशः स्वदुर्नये परदोषेक्षणदिव्यचक्षुषः ।
स्वगुणोच्चगिरो मुनिव्रताः परवर्णग्रहणेष्वसाधवः ॥१६-२९

अत्र प्रस्तुतचैद्यश्चैवंविध इति प्रतीतेरप्रस्तुतप्रशंसा ।

१३–प्रकटान्यपि नैपुणं महत्परवाच्यानि चिराय गोपितुम् ।
विवरीतुमथात्मनो गुणान्भृशमाकौशलमार्यचेतसाम् ॥१६-३०

कृष्णश्चैवंभूत इति विशेषप्रतीतेरप्रस्तुतप्रशंसा ।

१४–किमिवाऽखिललोककीर्तितं कथयत्यात्मगुणं महामनाः ।
वदिता न लघीयसोऽपरः स्वगुणं तेन वदत्यसौ स्वयम् ॥१६-३१

कृष्णश्चैद्यो चैवंविधाविति विशेषप्रतीतेरप्रस्तुतप्रशंसा ।

१५–विसृजन्त्यविकत्थनाः परे विषमाशीविषवन्नराः क्रुधम् ।
दधतोऽन्तरसाररूपतां ध्वनिसाराः पटहा इवेतरे ॥१६-३२

अत्राप्रस्तुतसामान्यात्प्रस्तुतविशेषप्रतीतेरप्रस्तुतप्रशंसा ।

१६–विदुरेष्यदपायमात्मना परतः श्रद्दधतेऽथवा बुधाः ।
न परोपहितं न च स्वतः प्रमिमीतेऽनुभवादृतेऽल्पधीः ॥१६-४०

अप्रस्तुतसामान्यात्प्रस्तुतविशेषप्रतीतेरप्रस्तुतप्रशंसा ।

---

# पर्यायोक्तम्

१–इन्द्रप्रस्थगमस्तावत्कारि मा सन्तु चेदयः ।
आस्माकदन्तिसान्निध्याद्वामनीभूतभूरुहः ॥२-६३

अत्र प्रस्तुताक्रमणकार्यं प्रस्तुतेनैव स्वकार्येण प्रतीतेः पर्यायोक्तालंकारः ।

---

## व्याजस्तुतिः

१—करोति कंसादिमहीभृतां वधाज्जनो मृगाणामिव यत्तव स्तवम्।
हरे! हिरण्याक्षपुरःसरासुरद्विपद्विप. प्रत्युत सा तिरस्क्रिया ॥१-३६

अत्र तिरस्क्रियेति इति निन्दाव्यञ्जकपदेन स्तुतेर्गम्यमानत्वाद् व्याजस्तुतिः।

सम्प्रत्यसाम्प्रतं वक्तुमुक्ते मुसलपाणिना।
निर्धारितेऽर्थे लेखेन खलूक्त्वा खलु वाचिकम् ॥२-७०

स्तुतिव्याजेन निन्दावगमाद् व्याजस्तुतिरत्र।

---

## आक्षेपः

१—मुदशः समीकगमनाय युवभिरथ संवभाषिरे।
शोकपिहितगलरुद्धगिरस्तरसागताश्रुजलकेवलोत्तराः ॥१५-८३

अत्र सामान्यतः सूचितस्य विरहस्य वक्ष्यमाणविशेषे निषेधादाक्षेपः।

# विरोधाभासः

१–श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि ।
वसन् ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥१-१

जगन्निवासस्य जगदेकदेशनिवासित्वमिति विरोधाभासः ।

२–लघूकरिष्यन्नतिभारभङ्गुरामसूं किल त्वं त्रिदिवादवातरः ।
उदूढलोकत्रितयेन साम्प्रतं गुरुर्धरित्री क्रियतेतरां त्वया ॥१-३६

लघुकर्ता गुरुकर्तेति गुणेन सह गुणस्य विरोधः ।

३–अमानवं जातमजं कुले मनोः प्रभाविनं भाविनमन्तमात्मनः ।
मुमोच जानन्नपि जानकीं न यः सदाभिमानैकधना हि मानिनः ॥१-६७

रामस्वरूपेणोत्पन्नमिति द्रव्येण सह द्रव्यस्य विरोधः ।

४–गुरुद्वयाय गुरुणोरुभयोरथ कार्ययोः ।
हरिर्विप्रतिषेधं तमाचचक्षे विचक्षणः ॥ २-६

तुल्यबलविरोधो विप्रतिषेधः । अतः विरोधाभासालंकारः ।

–घूर्णयन्मदिरास्वादमदपाटलितद्युती ।
रेवतीदशनोच्छिष्टपरिपूतपुटे दृशौ ॥ २-१६

उच्छिष्टस्य पावित्र्यजनकत्वमिति गुणेन सह गुणस्य विरोधः ।

६–उपेयुषो वर्त्म निरन्तराभिरसौ निरुच्छ्वासमनीकिनीभिः ।
रथस्य तस्यां पुरि दत्तचक्षुर्विद्वान् विदामास शनैर्न यातम् ॥ ३-३२

विद्वान् न विवेदेति जात्या सह क्रियाया विरोधः ।

७–कान्तेन्दुकान्तोपलकुट्टिमेषु प्रतिक्षपं हर्म्यतलेषु यत्र ।
उच्चैरध.पातिपयोमुचोऽपि समूहमूहुः पयसा प्रणाल्यः ॥ ३-४४

अत्र जात्या सह क्रियायाः विरोध इति विरोधाभासः ।

८–बृहत्तुलैरप्यतुलैर्वितानमालाऽवनद्धैरपि चाऽवितानैः ।
रेजे विचित्रैरपि या सचित्रैर्गृहैर्विशालैरपि भूरिशालैः ॥ ३-५०

सर्वत्र विरुद्धवदाभासाद् विरोधाभासालंकारः ।

९–अखिद्यताऽसन्नमुदग्रतापं रविं दधानेऽप्यरविन्दधाने ।
भृंगावलियंस्य तटे निपीतरसा नमत्तामरसा न मत्ता ॥ ४-१२

द्रव्येण सह द्रव्यस्य विरोध इति विरोधाभासः ।

१०–गव्यूतमार्गगतयोऽपि गतोरुमार्गाः
स्वैरं समाचक्रमिरे भुवि वेल्लनाय ।
दर्पोदयोल्लसितफेनजलानुसार-
सल्लक्ष्यपल्ययनवर्ग्मपदास्तुरङ्गाः ॥ ५-५३

गव्यूतमार्गगतयोऽपि गतोरुमार्गा इति विरोधाभासालंकारः ।

११–हिमऋतावपि ताः स्म भृशस्विदो युवतयः सुतरामुपकारिणि ।
प्रकटयत्यनुरागमकृत्रिमं स्मरमयं रमयन्ति विलासिनः ॥ ६-६१

हिमऋतावपि भृशस्विदो इति जात्या सह क्रियाया विरोधः ।

१२–समदनमवतंसितेऽधिकर्णं प्रणयवता कुसुमे सुमध्यमायाः ।
व्रजदपि लघुतां बभूव भारः सपदि हिरण्मयमण्डनं सपत्न्याः ॥७-

लघुगुरुत्वगुणविरोधस्य हीनार्थत्वेन परिहाराद्विरोध. ।

१३–विपुलकमपि यौवनोद्धतानां घनपुलकोदयकोमलं चकाशे ।
परिमलितमपि प्रियैः प्रकामं कुचयुगमुज्ज्वलमेव कामिनीनाम् ॥७–७

सर्वत्र विरुद्धवदाभासाद् विरोधाभासालंकारः ।

१४–स्वं रागादुपरि वितन्वतोत्तरीयं
कान्तेन प्रतिपदवारितातपाया. ।
सच्छत्रादपरविलासिनीसमूहा-
च्छायासीदधिकतरा तदापरस्या. ॥ ८-५

सच्छत्रादधिकतरच्छायेति जात्या सह क्रियाया विरोधः ।

१५–संस्पर्शप्रभवसुखोपचीयमाने
सर्वाङ्गे करतललग्नवल्लभायाः ।
कौशेयं व्रजदपि गाढतामजस्रं
सस्रंसे विगलितनीवि नीरजाक्ष्याः ॥ ८-६

गाढतां व्रजदपि सस्रंसे इति गुणेन सह द्रव्यस्य विरोधः ।

१६–आनन्दं दधति मुखे करोदकेन
श्यामाया दयिततमेन सिच्यमाने ।
ईर्ष्यन्त्या वदनमसिक्तमप्यनल्प-
स्वेदाम्बुस्नपितमजायतेतरस्याः ॥ ८-३६

असिक्तमपि सिक्तमिति गुणेन सह गुणस्य विरोधः ।

१७–रागान्धीकृतनयनेन नामधेय-
व्यत्यासादभिमुखमीरित. प्रियेण ।
मानिन्या वपुषि पतन्निसर्गमन्दो
भिन्दानो हृदयमसाहि नोदवज्रः ॥ ८-३९

निसर्गमन्दोऽपि हृदयं भिन्दान इति क्रियया सह क्रियाया विरोधः ।

१८-दधति स्फुट रतिपतेरिषवः शिततां यदुत्पलपलाशदृशः ।
हृदय निरन्तरबृहत्कठिनस्तनमण्डलावरणमप्यभिदन् ॥ ६-६६

आवरणमपि भिन्नमिति गुणेन सह क्रियाया विरोधः ।

१९-परिमन्थराभिरलघूरुभरादधिवेश्म पत्युरुपचारविधौ ।
स्खलिताभिरप्यनुपद प्रमदा. प्रणयाऽतिभूमिमगमन् गतिभि ॥६-७८

स्त्रीणा स्खलन पत्युः प्रीतिकरमिति गुणेन सह क्रियाया विरोध. ।

२०-न विभावयत्यनिशमक्षिगतामपि मा भवानतिसमीपतया ।
हृदयस्थितामपि पुनः परितः कथमीक्षते बहिरभीप्सतमाम् ॥ ६-८१

इन्द्रियसन्निकृष्टमपि न लक्ष्यत इति जात्या सह क्रियाया विरोध ।

२१-धैर्यमुल्वणमनोभवभावा वामतां च वपुरर्पितवत्यः ।
व्रीडित लालतसौगतधाष्ट्यांरतेनिरेऽभिरुचितेषु तरुण्यः ॥ १०-६८

रागादीना धैर्यं वामतामिति गुणेन सह क्रियाया विरोध. ।

२२-वारणार्थपदगद्गदवाचामीर्ष्यया मुहुरपत्रपया च ।
कुर्वते स्म मुदृशामनुकूल प्रातिकूलिकतयैव युवानः ॥ १०-७०

प्रतिकूलमप्यनुकूलमिति गुणेन सह गुणस्य विरोध. ।

२३-भातु नाम सुदृशा दशनाङ्कः पाटलो धवलगण्डतलेषु ।
दन्तवासंसि समानगुणश्रीः संमुखोऽपि परभागमवाप ॥ १०-८६

संमुखोऽपि परभागमवापेति क्रियया सह क्रियाया विरोधः ।

२४-सुभ्रुवामधिपयोधरपीठ पीडनैस्त्रुटितवत्यपि पत्युः ।
मुक्तमौक्तिकलघुर्गुणदोषा हारयष्टिरभवद्गुरुरेव ॥ १०-८७

लघुरपि गुरुरिति गुणेन सह गुणस्य विरोधः ।

२५–आस्तृतेऽभिनवपल्लवपुष्पैरप्यनारतारताऽभिरताभ्यः ।
दीयते स्म शयितुं शयनीये न क्षणः क्षणदयाऽपि वधूभ्यः ॥ १०-८

क्षणदयाऽपि क्षणो न दत्त इति जात्या सह क्रियाया विरोधः ।

२६–प्रहरकमपनीय स्वं निदिद्रासतोच्चैः
प्रतिपदमुपहूतः केनचिज्जागृहीति ।
मुहुरविशदवर्णां निद्रया शून्यशून्यां
ददददपि गिरमन्तर्बुध्यते नो मनुष्यः ॥ ११-४

गिरं ददददपि नो बुध्यत इति क्रियया सह क्रियाया विरोधः ।

२७–नखपदवलिनामीसन्धिभागेषु लक्ष्यः
क्षतिषु च दशनानामङ्गनायाः सशेषः
अपि रहसि कृतानां वाग्विहीनोऽपि जातः
सुरतविलसितानां वर्णको वर्णकोऽसौ ॥ ११-२६

वाग्विहीनोऽपि वर्णकविरिति गुणेन सह गुणस्य विरोधः ।

२८–सकलमपि निकामं कामलोलान्यनारी-
रतिरभसविमर्दैर्भिन्नवत्यङ्गरागे ।
इदमतिमहदेवाश्चर्यमाश्चर्यधाम्न-
स्तव खलु मुखरागो यन्न भेदं प्रयातः ॥ ११-३१

मुखरागो भेदं न प्रयात इति क्रियया सह क्रियाया विरोधः ।

२९–अविरतदयिताङ्गासङ्गसंचारितेन
छुरितमभिनवासृक्कान्तिना कुङ्कुमेन ।
कनकनिकषलेखा कोमलं कामिनीनां
भवति वपुरवाप्तच्छायमेवातपेऽपि ॥ ११-५५

आतपेऽप्यवाप्तच्छायमिति गुणेन सह क्रियाया विरोधः ।

३०–शौरेः प्रतापोपनतैरितस्ततः समागतैः प्रश्रयनम्रमूर्तिभिः ।
एकातपत्रा पृथिवीभृतां गणैरभूद्बहुच्छत्रतयाऽपि मेदिनी ॥ १२-३३

बहुच्छत्राऽप्येकच्छत्रेति गुणेन सह गुणस्य विरोधः ।

३१–प्रह्लानतीव क्वचिदुद्धतिश्रित क्वचित्प्रकाशानथ गह्वरानपि ।
साम्यादपेतानपि वाहिनी हरेस्तदातिचक्राम गिरीन्गुरूनपि ॥१२-५६

साम्यादपेतानपि गुरून् इति गुणेन सह गुणस्य विरोधः ।

३२–या घर्मभासस्तनयापि शीतलैः स्वसा यमस्यापि जनस्य जीवनैः ।
कृष्णापि शुद्धेरधिकं विधातृभिर्विहन्तुमंहांसि जलैः पटीयसी ।१३-६०

अत्र यमुनातज्जलगतत्वेन निर्दिष्टयोर्गुणक्रिययोर्विरोधः ।

३३–वपुषा पुराणपुरुषः पुरःक्षितौ परिपुञ्ज्यमानपृथुहारयष्टिना ।
भुवनैर्नतोऽपि विहितात्मगौरवः प्रणनाम नाम तनयं पितृष्वसुः ।१३-८

भुवनैर्नतोऽपि प्रणनामेति क्रियया सह क्रियाया विरोधः ।

३४–नवगन्धवारिविरजीकृता पुरो घनधूपधूमकृतरेणुविभ्रमाः ।
प्रचुरोद्धतध्वजविलम्बिवाससः पुरवीथयोऽथ हरिणातिपेतिरे ।१३-४९

रेणुविभ्रमशब्देन रजोविलासस्यापि विरजीकरणेन विरोधः ।

३५–मुखिनः पुरोऽभिमुखतामुपागतैः प्रतिमागृहे यत्र गृहरत्नभित्तिषु ।
मदमंगमैरविमदः प्रियाजनैः प्रमदं सपापरपराङ्मुखैरपि ॥१३-५५

वैमुख्ये-प्याभिमुख्यमिति गुणेन सह गुणस्य विरोधः ।

३६–घनचारुवाद्यलयगामि कोमलं
नवगीतमप्यनयगीतता दधत् ।

स्फुटसात्विकाङ्गिकमनृत्यदुज्ज्वलं
सविलासलासिकविलासिनीजनः ॥ १३-६६

अर्गाहितत्वं दधदिति विरोधाद् विरोधाभासोऽलंकारः ।

३७–किं नु चित्रमविवेदि भूपतिर्दर्शयन् द्विजगणानपूयत ।
राजतः पुपुविरे निरेनसः प्राप्य तेऽपि विमल प्रतिग्रहम् ॥ १४-३५

प्रतिग्रहीतापि शुद्ध इति क्रियया सह क्रियाया विरोधः

३८–सर्ववेदिनमनादिमास्थित देहिनामनुजिघृक्षया वपुः ।
क्लेशकर्मफलभोगवर्जित पुं विनोपममुमीश्वरं विदुः ॥ १४-६२

अकर्मारब्धत्वान्नित्यज्ञानत्वाद् विरोधाभासः ।

३९–श्रौतमार्गसुखगानकोविदब्रह्मषट्चरणगर्भमुज्ज्वलम् ।
श्रीमुखेन्दुसविधेऽपि राजते यस्य नाभिसरसीसरोरुहम् ॥ १४-६९

सरोरुहं इन्दुसन्निधौ शोभत इति जात्या सह द्रव्यस्य विरोधः ।

४०–सत्यवृत्तमपि मायिन जगद्वृद्धमप्युचितनिद्रामर्भकम् ।
जन्म बिभ्रतमजं नवंनवं यं पुराणपुरुषं प्रचक्षते ॥ १४-७०

हरेः सर्वेऽपि विरोधा इति विरोधाभासचतुष्टयसंसृष्टिः ।

४१–दिव्यकेसरिवपुः सुरद्विषो नैव लब्धशममायुधैरपि ।
दुर्निवाररणकण्डु कोमलैर्वक्ष एष निरदारयन्नखैः ॥ १४-७२

वज्राद्यभेद्यस्य कोमलनखविदार्यत्वमिति विरोधाभासः ।

४२–दीप्तिनिर्जितविरोचनादयं गां विरोचनसुतादभीप्सत ।
आत्मभूरवरजाखिलप्रजः स्वपतेरवरजत्वमाययौ ॥ १४-७४

अत्र गुणेन सह क्रियाया विरोधाद्विरोधाभासः ।

४३-एष दाशरथिभूयमेत्य च ध्वसितोद्धतदशाननामपि ।
राक्षसीमकृत रक्षितप्रजस्तेजसाधिकविभीषणा पुरीम् ॥ १४-८१

एष दाशरथिभूयमिति द्रव्येण सह द्रव्यस्य विरोधः ।

४४-भीष्मोक्त तदिति वचो निशम्य सम्य-
क्सा प्राज्यश्रियमधिगच्छता नृपेण ।
दत्तेऽर्घे महति महीभृता पुरोऽपि
त्रैलोक्ये मधुभिदभूदनर्घ्य एव ॥ १४-८८

अर्घ्येऽपि अनर्घ इति क्रियया सह क्रियाया विरोधः ।

४५-तव धन्यतेयमपि सर्वनृपतिकलितोऽपि यत्क्षणाम् ।
क्लान्तकरतलधृताचलक पृथिवीतले तुलितभूभृदुच्यसे ॥ १५-३०

सर्वनृपतितुलितोऽपि तत्तोलक इति विरोधाभासोऽलंकारः ।

४६-कृतगोरवधूरतेर्ग्मतो नृपमुख्ये नरकेऽपि सम्प्रति ।
प्रतिपत्तिरध कृतैनसो जनताभिस्तव साधु वर्ण्यते ॥ १६-८

गोपपरदारिकोऽप्यघ कृतैना इति विरोधाभासोऽलंकारः ।

४७-अतिविस्मयनीयकर्मणो नृपते १स्य विरोधि किंचन ।
यदिमुक्तनयो नयत्यसावहिताना कुलमक्षय क्षयम् । १६-६६

अक्षयमपि क्षय नयतीति गुणेन सह गुणस्य विरोधः ।

४८-स्वभुजद्वयकेवलायुधश्चतुरङ्गामपहाय वाहिनीम् ।
बहुशः सह शक्रदन्तिना स चतुर्दन्तमगच्छदाहवम् ॥ १६-६६

अत्र जात्या सह जाते विरोधाद् विरोधाभासः ।

४९–महतः कुकुराघकद्रुमानतिमात्रं दवबद्दहन्नपि ।
प्रतिचिन्नमिदं महीपतिर्यदकृष्णामवनीं करिष्यति ॥ १६-७९

दहन्नपि अकृष्णमिति क्रियया सह क्रियाया विरोधः ।

५०–प्रकुप्यतः दवसनसमीरणाहतिस्फुटोष्मभिस्तनुवसनान्तमारुतैः ।
युधाजितः कृतपरितूणवीजनं पुनस्तरा वदनसरोजमस्विदत् ॥ १७-

वीजनेऽपि स्वेद इति क्रियया सह क्रियाया विरोधः ।

५१–गते मुखच्छदपटसादृशी दृशः पथस्तिरोदधति घने रजस्यपि ।
मदानिलैरधिमधुचूतगन्धिभिर्द्विपा द्विपानभिययुरेव रंहसा ॥१७-६

तिरोहितदृष्टेरभियानविरोधात् विरोधाभासोऽलंकारः ।

५२–मिश्रीभूते तत्र सैन्यद्वयेऽपि प्रायेणायं व्यक्तमासीद्विशेषः ।
आत्मीयास्ते ये पराञ्च:पुरस्तादस्यावर्ती संमुखो यः परोऽसौ ॥१८-१

पराञ्चोऽपि आत्मीयाः सम्मुखोऽपि पर इति विरोधाभासः ।

५३–भित्वा घोणामायसेनाधिवक्षः स्यूरीपृष्ठो गाढ़ं पक्षेण विद्धः ।
शिक्षाहेतोर्गाढरज्ज्वेव बद्ध हतुं वक्त्रं नाशकद् दुर्मुखोऽपि ॥१८-२

अपिविरोधे । अत एव विरोधाभासोऽलङ्कारः ।

५४–प्रत्यासन्ने दन्तिनि प्रातिपक्षे यन्त्रानाग. प्रास्तवक्त्रच्छदोऽपि ।
क्रोधाक्रान्तः क्रूरनिर्दारिताक्षः प्रेक्षाञ्चक्रे नैव किञ्चिन्मदान्ध. ॥१८-२

अनावृतोन्मीलिताक्षस्याप्यदर्शनविरोधाद् विरोधाभास. ।

५५–सादरं युध्यमानाऽपि तेनाऽन्यनरसादरम् ।
सा दरं पृतना निन्ये हीयमाना रसादरम् ॥ १९-२३

युध्यमानापि हीयमानेति गुणेन सह गुणस्य विरोधः ।

५६–धृतप्रत्ययश्रृंगाररसरागैरपि द्विषैः ।
सरोषसम्भ्रमैर्दधे रौद्र एव रणे रसः ॥ १९-३७

रौद्रश्रृंगारयोर्विरोधित्वाद् विरोधाभासोऽलंकारः ।

५७–प्रवृत्ते विलसद्ध्यान साधनेऽप्यविषादिभिः ।
ववृधे विकसद्वानं युधमाप्य विषाणिभिः ॥ १९-४६

साधनेऽप्यविषादस्याविरोधाद्विरोधाभासः ।

५८–रणे रभसनिर्भिन्नद्विपपाटविकासिनि ।
न तत्र गतभी कश्चिद्विपपाट विकासिनि ॥ १९-५६

द्विपदलनेऽपि रणे निर्भीक इति विरोधाभासोऽलंकारः ।

५९–निशिताऽसिलतालूनैस्तया हस्तैनं हस्तिनः ।
युधामाना यथा दन्तैर्भग्नैरापुर्विहस्तताम् ॥ १९-६७

हस्तस्याऽच्छेदे वैहस्त्यमिति विरोधाभासोऽलंकारः ।

६०–दधतोऽपि रणे भीममभीरुत्वं भावयासुरम् ।
हता. परैरभिमुखाः सुरभूयमुपाययुः ॥ १९-७३

असुरभावेऽपि सुरभूयमुपाययुरिति विरोधाभासः ।

६१–विधातुमवतीर्णोऽपि लघिमानमसौ भुवः ।
अनेकमर्स्यसंघातमकरोद् भूमिवर्धनम् ॥ १९-१०५

भुवः लघिमानम् भूमिवर्धनमिति क्रियया सह क्रियाया विरोधः ।

६२–व्यक्ताऽसौदरिताऽरीणां यत्तदोयास्तदा मुहुः ।
मनोहृतोऽपि हृदये लेगुरेषां न पत्रिणः ॥ १९-१०६

मनोहृतोऽपि हृदये मनसि न लेगुरिति विरोधभासोऽलंकारः ।

६३–भवति स्फुटमागतो विपक्षान्न सपक्षोऽपि हि निर्वृतेर्विघाता ।
शिशुपालबलानि कृष्णयुक्तः सुतरां तेन तताप तोमरौघः ॥ २०-२६

सपक्षोऽप्यनिर्वर्तक इति विरोधाभासोऽलंकारः ।

६४–सर्वेण सर्वाश्रय इत्यनिन्द्यमानन्दभाजा जनित जनेन ।
यश्च द्वितीयं स्वयमद्वितीयो मुख्यः सतां गौणमवाप नाम ॥ २०-८२

अद्वितीयोऽपि द्वितीयमिति गुणेन सह गुणस्य विरोधः ।

---

# विभावना

१–रणद्भिराघट्टनया नभस्वतः पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः ।
स्फुटीभवद्ग्रामविशेषमूर्च्छनामवेक्षमाणं महतीं मुहुर्मुहुः ॥ १-१०

पुंव्यापारं कारणं विनापि मूर्च्छनादिकार्योत्पत्तिद्योतनाद्विभावना
सा चार्थी ।

२–अन्योन्यव्यतिकरचारुभिर्विचित्रै-
रत्रस्यन्नवमणिजन्मभिर्मयूखैः ।
विस्मेरान् गगनसदः करोत्यमुष्मि-
न्नाकाशे रचितमभित्ति चित्रकर्म ॥ ४-५३

भित्तिं विनापि चित्रकर्मकार्योत्पत्तिरिति विभावना सा च शाब्दी ।

–विनयति सुदृशो दृशः परागं प्रणयिनि कौसुममाननानिलेन ।
तदहितयुवतेरभीक्ष्णमक्ष्णोर्द्वयमपि रोषरजोभिरापुपूरे ॥ ७-५७

रजःपूरणकारणत्वायोगादकारणत्वमेव पूरणमिति विभावना ।

४-आमृष्टास्तिलकरुचः स्रजो निरस्ता
नीरक्तं वसनमपाकृतोऽङ्गरागः ।
कामः स्त्रीरनुशयवानिव स्वपक्ष-
व्याघातादिति सुतरां चकार चारूः ॥ ८-६१

अत्र तिलकादीनामभावेऽपि चारुत्वमिति विभावना ।

५-अर्पितं रसितवत्यपि नामग्राहमन्ययुवतेर्दयितेन ।
उज्झति स्म मदमप्यपिबन्ती वीक्ष्य मद्यमितरा तु ममाद ॥ १०-२०

अत्रोत्तरार्द्धेऽपिबन्त्यपि ममादेति विभावना सा च शाब्दी ।

६-संश्येच्छुरभिधातुमनीशा संमुखी न च बभूव दिदृक्षुः ।
स्पर्शनेन दयितस्य नतभ्रू रङ्गमङ्गमपलापि चकम्पे ॥ १०-४१

अत्र द्वितीयार्द्धे कारणाभावेऽपि कम्पोत्पत्तेरिति विभावना ।

७-सुखवेदनाहृषितरोमकूपया शिथिलीकृतेऽपि वसुदेवजन्मनि ।
कुसुमेषुरज्जुलतया न तत्यजे विकसत्कदम्बनिकुरम्बचारुता ॥ १३-१३

अत्र शिथिलीकृते हृषितरोमकूपयेत्यकारणकार्यकथनाद्विभावना ।

८-मुचुकुन्दतल्पशरणान्न मगधपतिघातिनोऽजसः ।
सिद्धमचल धवलत्वमहो तव रोहिणीतनयसाहचर्यतः ॥ १५-२४

कारणं विना कार्योदयादाश्चर्यम् । अत एवात्र विभावनालंकारः ।

९-दधतः शशाङ्कितशशाङ्करुचि लसदुरश्छदं वपुः ।
चक्रुरस्य सह पुरन्ध्रिजनैरयथार्थसिद्धि सरकं महीभृतः ॥ १५-८०

अत्र मद्यपानरूपकारणत्वे सत्यपि मादकतानुत्पत्तिर्विभावना ।

१०–मृशमङ्गसादमरुणत्वमविशदवचः कपोलयोः ।
वाक्यमसकलमपास्य मदं विदधुस्तदीयगुणमात्मना शुचः ॥ १५-८२

अत्र मदाभावेऽपि तत्कार्योदयादिति उक्तनिमित्ताख्या विभावना ।

---

## विशेषोक्तिः

१–आमृष्टास्तिलकरुचः स्रजो निरस्ता
नीरक्तं वसनमपाकृतोऽङ्गरागः ।
कामः स्त्रीरनुशयवानिव स्वपक्ष-
व्याघातादिति सुतरां चकार चारूः ॥ ८-६१

अत्र तिलकामर्शादौ कारणे सत्यपि न वैरूप्यमिति विशेषोक्तिः ।

२–विहिताञ्जलिर्जनतया दधती विकसत्कुसुम्भकुसुमारुणताम् ।
चिरमुज्झितापि तनुरौज्झदसौ न पितृप्रसूः प्रकृतिमात्मभुवः ॥ ९-१४

अत्र तनुत्यागरूपकारणसद्भावेऽपि प्रकृतित्यागरूपकार्यानुदयाद् विशेषोक्तिः ।

३–अनुदेहमागतवतः प्रतिमां परिणायकस्य गुरुमुद्वहता ।
मुकुरेण वेपथुभृतोऽतिभरात् कथमप्यपाति न वधूकरतः । ९-७३

अत्र वेपथुभाररूपकारणसत्वेऽपि पतनरूपकार्यानुत्पत्तेर्विशेषोक्ति ।

४–अर्पितं रसितवत्यपि नामग्राहमन्ययुवतेर्दयितेन ।
उज्झति स्म मदमप्यपिबन्ती वीक्ष्य मद्यमितरा तु ममाद ॥ १०-२७

अत्र पूर्वार्द्धे रसितवत्यपि न ममादेति विशेषोक्तिः ।

५–अन्ययाऽन्यवनितागतचित्तं चित्तनाथमभिशङ्कितवत्या ।
पीतभूरिसुरयापि न मेदे निर्वृतिर्हि मनसो मदहेतु ॥ १०-२८

अत्र भूरिसुरापानकारणेऽपि मत्ततारूपकार्यानुत्पत्तेर्विशेषोक्ति. ।

६–सकचेच्छुरभियातुमनीशा सम्मुखी न च बभूव दिदृक्षुः ।
स्पर्शनेन दयितस्य नतभ्रूरङ्गसङ्गचपलापि चकम्पे ॥ १०-४१

अत्रागसङ्गाभिलाषरूपे कारणे सत्यपि अगसगानुत्पत्तेर्विशेषोक्तिः ।

७–पश्यन्कृतार्थैरपि वल्लवीजनो जनाधिनाथं न ययौ वितृष्णताम् ।
एकान्तमौग्ध्यानवबुद्धविभ्रमै प्रसिद्धविस्तारगुणैर्विलोचनै. ॥१२-३६

अत्र तृप्तिकारणे दर्शने सत्यपि तृप्तिकार्यानुत्पत्तेर्विशेषोक्तिः ।

८–नैक्षतार्थिनमवज्ञया मुहुर्याचितस्तु न च कालमाक्षिपत् ।
नादिताल्पमथ न व्यकत्थयद्दत्तमिष्टमपि नान्वशेत सः ॥१४-४५

अत्रार्थिसन्दोहयाच्ञादिकारणेऽपि विलम्बादिकार्यानुत्पत्तेर्विशेषोक्तिः ।

९–प्रेम तस्य न गुणेषु नाधिकं न स्म वेद न गुणान्तरं च सः ।
दित्सया तदपि पार्थिवोऽर्थिन गुण्यगुण्य इति न व्यजीगणत् ॥१४-४७

अत्र गुणप्रियत्वकारणेऽपि गुणागुणविमर्शरूपकार्यानुत्पत्तेरुक्त-
निमित्ता विशेषोक्ति. ।

१०–अथवा न धर्ममबुबोधसमयमवयात बालिशाः ।
नाममयमिह मृषापलितो हतबुद्धिरप्रणिहितः सरित्सुतः ॥१५-१६

वृद्धोऽपि न जानातीति कारणे सत्यपि कार्यानुदयाद्विशेषोक्तिः ।

---

# असंगतिः

१–पीडिते पुर उरःप्रतिपेषं भर्तरि स्तनयुगेन युवत्या ।
स्पष्टमेव दलतः प्रतिनार्यास्तन्मयत्वमभवद्धृदयस्य ॥१०-४६

अन्यपीडनादन्यदलनमिति कार्यकारणयो भिन्नदेशत्वेऽसंगतिः ।

---

# विषमम्

१–रणेषु तस्य प्रहिताः प्रचेतसा सरोषहुङ्कारपराङ्मुखीकृताः ।
प्रहर्तुरेवोरगराजरज्जवो जवेन कण्ठं सभयाः प्रपेदिरे ॥१-५६

अत्र परहिंसाप्रयुक्तायुधस्य वैपरीत्यनर्थोत्पत्तिरूपो विषमालंकारः ।

२–निशान्तनारीपरिधानधूननस्फुटागसाऽप्यूरुषु लोलचक्षुषः ।
प्रियेण तस्यानपराधबाधिताः प्रकम्पनेनानुचकम्पिरे सुराः ॥१-६१

अत्रापराधिवायुरूपहेतोः रावणप्रीतिरूपविरुद्धकार्योत्पत्तेर्विषमम् ।

३–अभीक्ष्णमुष्णैरपि तस्य सोष्मणः सुरेन्द्रबंदीश्वसितानिलैर्यथा ।
सचन्दनाम्भःकणकोमलैस्तथा वपुर्जलार्द्रापवनैर्न निर्ववौ ॥१-६५

अत्र सन्तप्तस्योष्णोपचारान्निर्वृतिरिति विषमालंकारः ।

४–स्पृशन्ति शरवत्तीक्ष्णाः स्तोकमन्तर्विशन्ति च ।
बहुस्पृशाऽपि स्थूलेन स्थीयते बहिरश्मवत् ॥२-७८

अत्र तीक्ष्णस्थूलयोर्विरूपयोः संघटनया विषमालंकारः ।

५–प्रारभन्तेऽल्पमेवाज्ञा काम व्यग्रा भवन्ति च ।
महारम्भा कृतधियस्तिष्ठन्ति च निराकुला. ॥२-७९

अत्रापि अज्ञकृतधियोर्विरूपयो मघटनया विषमालकार: ।

६–रतौ ह्रिया यत्र निशम्य दीपान्जालागताम्भोर्ऽधिगृह गृहिण्य: ।
बिभ्युर्विडालेक्षणभीषणाभ्यो वैदूर्यकुड्येषु शशिद्युतिभ्य ॥३-४५

अत्र लज्जावरणाय दीपनिर्वाणपरो न तद्सिद्धि, प्रत्युत भय चोत्पन्नमिति विषमम् ।

७–कुर्वद्भिर्मुखरुचिमुज्ज्वलामजस्र
यैस्तोयैरसिचत वल्लभा विलासी ।
तैरेव प्रतियुवतेरकारि दूरा-
त्कालुष्य शशधरदीधितिच्छटाच्छे ॥८-३८

स्वच्छतोयै कालुष्य कृतमिति विरुद्धकार्योत्पत्तिरूपो विषमभेद. ।

८–सक्रान्त प्रियतमवक्षसोऽङ्गराग
साध्वस्या सरसि हृरिष्यतेऽधुनाम्भ: ।
तुष्टेव सपदि हृतेऽपि तत्रतेपे
वस्याश्चिरस्फुटनखलक्ष्मण: सपत्न्या ॥८-४१

अत्र सन्तापशान्त्यर्थेन तद्विरुद्धसन्तापोत्पादनाद्विरुद्धकार्योत्पत्तिरूपो विषमालकार ।

९–श्लक्ष्णं यत्परिहितमेतयो विलासा-
र्थानार्थं तदुदकसेक सक्तमूर्वो. ।
नारीणा विमलतनो समुल्लसन्त्या
भासान्तर्दधतुरुरू दुकूलमेव ॥८-६५

अत्र दुकूल भासान्तरदधतुरूररिति विरुद्धकार्योत्पत्तिरूपं विषमम् ।

१०–कुमुदवनमपश्रि श्रीमदम्भोजषण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिलसितानां ह्ो विचित्रो विपाकः ॥११-६४

अत्र अपश्रिश्रीमत्वादीनां विरूपाणात् संघटनात् विषमालंकारः ।

११–लज्जते न गदितः प्रियं परो वक्तुरेव भवति त्रपाधिका ।
व्रीडमेति न तव प्रियं वदन्ह्रीमतामभवतैव भूयते ॥१४-२

अत्र परःकृपणश्चेत्यनयोर्विरूपयोः संघटनाद्विषमम् ।

१२–अनृतां गिरं न गदसीति जगति पटहैर्विघुष्यसे ।
निन्द्यमथ च हरिमर्चयतस्तव कर्मणैव विकसत्यसत्यता ॥१५-१६

अत्रासत्यप्रसिद्धसत्याचरणयोर्विरूपयोर्घटनाद्गो विषमालंकारः ।

---

# विचित्रम्

१–वपुषा पुराणपुरुषः पुरःक्षितौ परिपुञ्ज्यमानपृथुहारयष्टिना ।
भुवनैर्नतोऽपि विहितात्मगौरवः प्रणनाम नाम तनयं पितृष्वसुः ॥१३-८

भुवनैर्नतोऽपि प्रणनामेति अभिमतफलप्राप्तये तद्विरुद्धस्य विधानाद् विचित्रम् । तच्च विरोधाभासेन संकीर्णम् ।

# अधिकम्

१–श्रिय: पति: श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि ।
वसन् ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥१-१

अत्राल्पीयसि वसुदेवसद्मनि सकलजगदाश्रयतया महीयसो हरेराधेयत्वकथनादधिकालंकारः ।

२–युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत ।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः ॥१-२३

अत्राश्रयिभूतहरिशरीरापेक्षया आश्रयभूतानां प्रीत्याधिक्यादधिकम् ।

३–विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुनः स पुरस्त्रियैकतमयैकया दृशा ॥१३-४०

अत्र हरेराधारस्य कान्ताकटाक्षादल्पत्वादधिकमत्र ।

४–किं क्रमिष्यति किलैष वामनो यावदित्थमहसन्न दानवाः ।
तावदस्य न ममौ नभस्तले लङ्घितार्कशशिमण्डलः क्रमः ॥१४-७५

अत्राधारान्नभस्तलादाधेयस्य क्रमस्याधिककथनादधिकालंकारः ।

५–अमी पुरः क्षणमिव पश्यतो महत्तनूदरस्थितभुवनत्रयस्य तत् ।
विशालतां दधति नितान्तमायते बलद्विषा मधुमथनस्य चक्षुषि ॥१६-४३

अत्र भुवनत्रयापेक्षया बलस्याल्पत्वाच्चाधिकालंकारः ।

# अन्योन्यम्

१–रजनीमवाप्य रुचमाप शशी सपदि व्यभूषयदसावपि ताम् ।
अविलम्बितक्रममहो महतामितरेतरोपकृतिमच्चरितम् ॥९-३३

अत्र रजनीशशिनोर्मिथः शोभाकरत्वादन्योन्यालंकारः ।

२–सुगन्धमद्विश शुभ्रमम्लानि कुसुम दिव. ।
भूरि तत्रापतत्तस्मादुत्पपात दिवं यशः ॥१६-२०

अत्र द्युप्रद्युम्नयो कुसुमयशोभ्यामन्योन्योपस्कारजननादन्योन्यालंकारः ।

---

# विशेषः

१–विरोधिवचसो मूकान् वागीशानपि कुर्वते ।
जडानप्यनुलोमार्थान् प्रवाचः कृतिना गिरः ॥२-२५

अत्र वागीशाना मूकीकरणाज्जडानां प्रवाग्मिकरणाच्च शक्य-वस्तुकरणरूपो विशेषोऽलंकारः ।

---

# समम्

१–न खलु वयममुष्य दानयोग्याः पिबति च पाति च याऽसकौ रहस्त्वाम् ।
व्रज विटपममुं ददस्व तस्यै भवतु यतः सदृशोश्चिराय योगः ॥७-५३

अत्र अन्योन्यसदृशरूपत्वेन प्रशंसनात् समालंकारः ।

---

# एकावली

१–अवसरमधिगम्य तं हरन्त्यो हृदयमयत्नकृतोज्ज्वलस्वरूपाः ।
अवनिषु पदमङ्गनास्तदानीं न्यदधत विभ्रमसम्पदोऽङ्गनासु ॥७·३

अत्रोत्तरोत्तरस्य पूर्वपूर्वविशेषकत्वावगमादेकावली ।

२–चारुता वपुरभूषयदासां तामनूननवयौवनयोगः ।
तं पुनर्मकरकेतनलक्ष्मीस्तां मदो दयितसंगमभूषः ॥१०·३३

अत्रोत्तरोत्तरस्य पूर्वपूर्वविशेषकत्वादेकावली ।

---

# काव्यलिंगम्

१–चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम् ।
विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः ॥१·३

शरीरीति पुंस्त्वावधारणहेतोः पदार्थहेतुकं काव्यलिङ्गम् ।

२–निदाघधामानमिवाधिदीधितिं मुदा विकासं मुनिमभ्युपेयुषी ।
विलोचने बिभ्रदधिश्रितश्रिणी स पुण्डरीकाक्ष इति स्फुटोऽभवत् ॥१·२४

विभ्रत्स्फुटोऽभवदिति पदार्थहेतौ काव्यलिङ्गमलंकारः ।

३–हरत्यघं सम्प्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥१·२६

शरीरेत्यादिवाक्यत्रयोक्त्या वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः ।

४–अनन्यगुर्व्यास्तव केन केवलः पुराणमूर्तेर्महिमाऽवगम्यते ।
मनुष्यजन्माऽपि सुरासुरान्गुणैर्भवान्भवच्छेदकरैः करोत्यधः ॥१-३५

अनन्यगुर्व्या इति वाक्यार्थहेतुत्वात् वाक्यार्थहेतुक काव्यलिंगम् ।

५–तदिन्द्रसन्दिष्टमुपेन्द्र ! यद्वचः क्षणं मया विश्वजनीनमुच्यते ।
समस्तकार्येषु गतेन धुर्यतामहिद्विषस्तद्भवता निशम्यताम् ॥१-४१

अत्र पदार्थहेतुकं काव्यलिंगमलंकारः ।

६–निशान्तनारीपरिधानधूननस्फुटागसाऽप्यूरुषु लोलचक्षुषः ।
प्रियेण तस्यानपराधबाधिताः प्रकम्पनेनानुचकम्पिरे सुराः ॥१-६१

प्रियत्वं प्रति लोलचक्षुष इति पदस्यार्थे पदार्थहेतुकं काव्यलिंगम् ।

७–स्वयं विधाता सुरदैत्यरक्षसामनुग्रहावग्रहयोर्यदृच्छया ।
दशाननादीनभिराद्धदेवतावितीर्णवीर्यातिशयान्हसत्यसौ ॥१-७१

अत्र हासं प्रति अभिराद्धदेवतेति पदार्थहेतुकं काव्यलिंगम् ।

८–रत्नस्तम्भेषु संक्रान्तप्रतिमास्ते चकाशिरे ।
एकाकिनोऽपि परितः पौरुषेयवृता इव ॥२-४

संक्रान्तप्रतिमपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिंगम् ।

९–करदीकृतभूपालो भ्रातृभिर्जित्वरैर्दिशाम् ।
विनाऽप्यस्मदलं भूष्णुरिज्यायै तपसः सुतः ॥२-९

अत्र करदीकृतभूपालपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिंगम् ।

१०–सम्पदा सुस्थिरंमन्यो भवति स्वल्पयाऽपि यः ।
कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥२-३२

कृतकृत्यपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिंगम् ।

११–मखविघ्राय सकलमित्यनुत्थाप्य राजकम् ।
हन्त ! जातमजातारेः प्रथमेन त्वयाऽरिणा ॥२-१०२

अरिभवनं प्रति मखविघ्नायेति पदार्थहेतौ काव्यलिंगम् ।

१२–अमृतं नाम यत्सन्तो मन्त्रजिह्वेषु जुह्वति ।
शोभैव मन्दरक्षुब्धक्षुभिताम्भोधिवर्णना ॥२-१०७

वाक्यार्थयोर्हेतुहेतुमद्भावाद्वाक्यार्थहेतुकं काव्यलिंगम् ।

१३–नविशेष सुते पाण्डोर्भक्तिं भवति तन्वति ।
वैरायितारस्तरला: स्वयं मत्सरिणः परे ॥२-११५

अत्र वैराचरणं प्रति भक्तितननं हेतुरिति पदार्थहेतुकं काव्यलिंगम् ।

१४–न केवलं य: स्वतया मुरारेरनन्यसाधारणतां दधानः ।
अत्यर्यमुद्वेजयिता परेषां नाम्नापि तस्यैव स नन्दकोऽभूत् ॥३-१६

अत्रानेकपदार्थगतं काव्यलिंगम् ।

१५–ध्वजाग्रधामा ददृशेऽथ शौरे: संक्रान्तमूर्तिर्मणिमेदिनीषु ।
फणावतस्त्रासयितुं रसायास्तलं विविक्षन्निव पन्नगारिः ॥३-२३

अत्र संक्रान्तमूर्तिपदस्यादौ हेतुरिति पदार्थहेतुकं काव्यलिंगम् ।

१६–उपेयुषो वर्त्म निरन्तराभिरसौ निरुच्छ्वासमनीकिनीभिः ।
रथस्य तस्या पुरि दत्तचक्षुर्विद्वान् विदांमास शनैर्न यातम् ॥३-२२

व्यासंगस्य पदार्थत्वात्पदार्थहेतुक काव्यलिंगम् ।

१७–क्षितिप्रतिष्ठोऽपि मुखारविन्दैर्वधूजनश्चन्द्रमधश्चकार ।
अतीतनक्षत्रपथानि यत्र प्रासादशृङ्गाणि मृषाध्यरुक्षत् ॥३-५२

अत्राधःकरणवाक्यार्थस्य हेतुत्वात् काव्यलिंगमलंकारः ।

१८–क्षुण्णं यदन्तःकरणेन वृक्षाः फलन्ति कल्पोपपदास्तदेव ।
अध्यूषुषस्तामभवज्जनस्य या. संपदस्त्वा मनसोऽप्यगम्या ॥३-५६

अनेकादार्थगतत्वात् काव्यलिंगमलंकारोऽयम् ।

१९–बाणाहवव्याहतशंभुशक्तेरासत्तिमासाद्य जनार्दनस्य ।
शरीरिणा जैत्रशरेण यत्र निःशङ्कमूषे मकरध्वजेन ॥३-६१

अत्र निःशंकनिवासहेतुत्वोक्तेः काव्यलिंगमलंकारः ।

२०–उत्सङ्गितास्भःकणको नभस्वानुदन्वतः स्वेदलवान् ममार्ज ।
तस्यानुवेलं व्रजतोऽधिवेलमेलालतास्फालनलब्धगन्धः ॥३-७६

अत्रानेकपदार्थहेतुत्वात् पदार्थहेतुकं काव्यलिंगमलंकारः ।

२१–लवङ्गमालाकलितावतंसास्ते नारिकेलान्तरपः पिबन्तः ।
आस्वादितार्द्रक्रमुकाः समुद्रादभ्यागतस्य प्रतिपत्तिमीयुः ॥३-८१

अत्राभ्यागतप्रतिपत्तिप्राप्तेः पदार्थहेतुत्वात् काव्यलिंगम् ।

२२–निःश्वासधूमं सह रत्नभाभिर्भित्त्वोत्थितं भूमिमिवोरगाणाम् ।
नीलोपलस्यूतविचित्रधातुमसौ गिरिं रैवतकं ददर्श ॥४-१

अत्र नीलोत्पलेत्यादिपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिंगम् ।

२३–क्वचिज्जलापायविपाण्डुराणि धौतोत्तरीयप्रतिमच्छवीनि ।
अभ्राणि बिभ्राणमुमाङ्गसङ्गविभक्तभस्मानमिव स्मरारिम् ॥४-५

अत्रानेकपदार्थगतत्वात् पदार्थहेतुकं काव्यलिंगम् ।

२४–यत्रोज्झिताभिर्मुहुरम्बुवाहैः समुन्नमद्भिर्न समुन्नमद्भिः ।
वनं बबाधे विषपावकोत्था विपन्नगानामविपन्नगानाम् ॥४-१५

अत्र समुन्नमन् पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिंगम् ।

२५–दृष्टोऽपि शैलः स मुहुर्मुरारेरपूर्ववद्विस्मयमाततान ।
क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः ॥४-१७

अत्र रमणीयत्वलक्षणस्य वाक्यार्थस्यैकपदार्थगतं काव्यलिङ्गम् ।

२६–आक्रान्तमार्गमिह सानुषु संनिषण्णाः
पश्यन्ति शान्तमलसान्द्रतरांशुजालम् ।
सम्पूर्णलब्धललनालपनोपमान-
मुत्सङ्गसङ्गिहरिणस्य मृगाङ्कमूर्तेः ॥४--२

अत्र विशेषणगत्या पदार्थे हेतुतावकल्पनात् काव्यलिङ्गम् ।

२७–मुक्तं मुक्तागौरमिह क्षीरमिवाभ्रै-
र्वापीष्वन्तर्लीनमहानीलदलासु ।
शस्त्रीश्यामैरंशुभिराशु द्रुतमम्भ-
श्छायामच्छामृच्छति नीलीसलिलस्य ॥४-४४

वापीष्विति विशेषणगत्या हेतुतावकल्पनात् काव्यलिङ्गम् ।

२८–प्रारब्धमन्नमवनस्य भुवि स्थिताग्र-
मेकः पलायत जवेन कृतार्तनादः ।
अन्यः पुनर्मुहुरदप्लवतान्तराल-
भग्नोन्नतः पथि वशाविनितानिभोष्ट्री । ५-५

अत्र चतुर्थपादगतवाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गम् ।

२९–यानाज्जनः परिजनैरवतार्यमाणा
राज्ञीर्नरापनयनाकुलसौविदल्लाः ।
स्रस्तावगुण्ठनपटाः क्षणलक्ष्यमाण-
वक्त्रश्रियः सभयकौतुकमीक्षते स्म ॥५-१७

अत्र स्रस्तावगुण्ठनपटपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम् ।

३०–कण्ठावसक्तमृदुबाहुलतास्तुरङ्गा-
द्राजावरोधनवधूरवतारयन्तः ।
आलिङ्गनान्यधिकृताः स्फुटमापुरेव
गण्डस्थलीः शुचितया न चुचुम्बुरासाम् ॥५-१८

अत्र कण्ठावसक्तमृदुबाहुलतापदस्यार्थो काव्यलिंगमलंकारः ।

३१–उरसितकाण्डपटकान्तरलीयमान-
मन्दानिलप्रशमितश्रमघर्मतोयैः ।
दूर्वाप्रतानसहशास्तरणेषु भेजे ।
निद्रासुखं वसनसद्मसु राजदारैः ॥५-२२

अत्र निद्रासुखभजनं प्रति विशेषणगत्या हेतुकथनाद् काव्यलिंगम् ।

३२–प्रस्वेदवारिसविशेषविषक्तमङ्गे
कूर्पासकं क्षतनखक्षतमुत्क्षिपन्ती ।
आविर्भवद्घनपयोधरबाहुमूला
शातोदरी युवदृशां क्षणमुत्सवोऽभूत् ॥५-२३

अत्र घनपयोधरबाहुमूला प्रति हेतुकथनात् काव्यलिंगम् ।

३३–त्रासाकुलः परिपतन् परितो निकेतान्
पुंभिर्न कैश्चिदपि धन्विभिरन्वबन्धि ।
तस्थौ तथापि न मृगः क्वचिदङ्गनाना-
माकर्णपूर्णनयनेषुहतेक्षणश्रीः ॥५-२६

हतेक्षणश्रीरिति विशेषणगत्योक्तत्वाद् काव्यलिंगमलंकारः ।

३४–प्रणयकोपभृतोऽपि पराङ्मुखाः सपदि वारिधरारवभीरवः ।
प्रणयिनः परिरब्धुमथाङ्गना ववलिरे वलिरेचितमध्यमाः ॥६-३८

अत्र वारिधरारवभीरव इति पदार्थहेतुकं काव्यलिंगम् ।

३५-कनककङ्कपिशङ्गदलैर्दधे सरजसारुणकेसरचारुभिः ।
प्रियविमानितमानवतीरुषां निरसनैरसनैरवृथार्थता ॥६-४७

निरसनैरिति पदार्थहेतौ काव्यलिङ्गमलंकारः ।

३६-हिमऋतावपि ताः स्म भृशस्विदो युवतयः सुतरामुपकारिणि ।
प्रकटयत्यनुरागमकृत्रिमं स्मरमयं रमयन्ति विलासिनः ॥६-६१

अनुरागप्रकटन हेतुरिति पदार्थहेतुकं काव्यलिङ्गम् ।

३७-जघनमल्पपृथूरु दृढं दधद्विरलपीनपयोधरबन्धुरम् ।
दयिततमशिरोधरावलम्बिस्वभुजलताविभवेन काचिदूहे ॥७-२०

अत्रानेकपदार्थहेतुत्वात् काव्यलिङ्गमलंकारः ।

३८-रथचरणधराङ्गनाकराब्जव्यतिकरसम्पदुपात्तसौमनस्याः ।
जगति सुमनसस्तदादि नूनं दधति परिस्फुटमर्थतोऽभिधानम् ॥७-३८

अत्र विशेषणगत्या सुमन इति पदार्थहेतुकत्वात् काव्यलिङ्गम् ।

३९-मुहुरसुहसितामिवालिनादैर्वितरसि नः कलिकां किमर्थमेनाम् ।
वसतिमुपगतेन धाम्नि तस्याः शठ कलिरेव महांस्त्वयाद्य दत्तः ॥७-५५

अत्र पूर्ववाक्यार्थस्योत्तरवाक्यार्थहेतुत्वाद् वाक्यार्थहेतुकं काव्यलिङ्गम् ।

४०-अधिकमरुणिमानमुद्वहद्भिर्विकचदलीतमरीचिरश्मिजालैः ।
परिचितपरिचुम्बनाभियोगादपगतकुङ्कुमरेणुभिः कपोलैः ॥७-६३

अत्र विकचदित्यादिपदार्थहेतुत्वात् काव्यलिङ्गम् ।

४१-प्रियकरपरिमार्गादङ्गनानां यदाभून्
पुनरधिकतरैव स्वेदतोयोदयश्रीः ।

अथ वपुरभिषेक्तुं तास्तदाम्भोभिरीषु-
र्वनविहरणखेदम्लानमम्लानशोभाः ॥७-७५

अत्र पूर्ववाक्यार्थस्योत्तरवाक्यार्थहेतुत्वात् काव्यलिंगम् ।

४२–आयान्त्या निजयुवती वनान्तसङ्गं
बर्हाणामपरिमितखण्डिनीं भरेण ।
आलोक्य व्यवदधतं पुरो मयूरं
कामिन्यः श्रदधुरनार्जवं नरेषु ॥८-११

अत्र तादृशमयूरालोकनमिति हेतुकथनात् काव्यलिंगम् ।

४३–आसीना तटभुवि सस्मितेन भर्त्रा
रम्भोरूरवतरितुं सरस्यनिच्छुः ।
धुन्वाना करयुगमीक्षितुं विलासा-
ञ्छीतालुः सलिलगतेन सिच्यते स्म ॥८-१९

अत्र शीतालुपदस्यार्थो हेतुरिति काव्यलिंगमलंकारः ।

४४–मुग्धत्वादविदितकैतवप्रयोगा
गच्छन्त्यः सपदि पराजयं तरुण्यः ।
ताः कान्तैः सह करपुष्करेरिताम्बु
व्यात्युक्षीमभिसरणग्लहामदीव्यन् ॥८-३२

अत्राविदितकैतवप्रयोगस्य हेतुत्वात् काव्यलिंगमलंकारः ।

४५–उद्वीक्ष्य प्रियकरकुड्मलापविद्धै-
र्वक्षोजद्वयमभिषिक्तमन्यनार्याः ।
अम्भोभिर्मुहुरसिचद्वधूरमर्षा-
दात्मीयं पृथुतरनेत्रयुग्ममुक्तैः ॥८-३७

अत्र सेकं प्रति तादृशोद्वीक्षणं हेतुरिति पदार्थहेतुकं काव्यलिंगमलंकारः ।

४६–भिक्तायाः क्षणमभिषिच्य पूर्वमन्या-
मन्यस्याः प्रणयवता वतावलायाः ।
कालिम्ना समधित मन्युरेव वक्त्र
प्रापाक्ष्णोर्गलदपशब्दमञ्जनाम्भ ॥८-४३

पूर्ववाक्यार्थेनोत्तरवाक्यार्थस्य हेतोः कथनात् वाक्यार्थहेतुकं काव्यलिंगम् ।

४७–आस्माकी युवतिदृशामसौ तनोति
च्छायेव श्रियमनपायिनी किमेभिः ।
मत्वेव स्वगुणपिधानसाम्यसूयं
पानीयैरिति विदधाविरेऽञ्जनानि ॥८-५०

अत्राञ्जननिष्फलता प्रति हेतुरिति वाक्यार्थहेतुक काव्यलिंगमलकारः ।

४८–फेनानामुरसिरहेषु हारलीला
चैलश्रीर्जघनतलेषु शैवलानाम् ।
गण्डेषु स्फुटरचनाब्जपत्रवल्ली
पर्याप्त पयसि विभूषणं वधूनाम् ॥८-५६

अत्र वाक्यार्थहेतुक काव्यलिगमलकार. ।

४६-सीमन्त निजमनुबध्नती कराभ्या-
मालक्ष्य स्तनतटबाहुमूलभागा ।
भर्त्रान्या मुहुरभिलष्यता निदध्ये
नैवाहो विरमति कौतुक प्रियेभ्य. ॥८-६६

अत्र स्तनतटादिदर्शन प्रति हेतुकथनात् पदार्थहेतुकं काव्यलिंगम् ।

५०–स्वच्छाम्भःस्नपनविधौतमङ्गमोष्ठ-
स्ताम्बूलद्युतिविशदो विलासिनीनाम् ।
वासश्च प्रतनु विविक्तमस्त्वितीया-
नाकल्पो यदि कुसुमेषुणा न शून्यः ॥८-७०

अत्रागोष्ठादीनामाकल्पत्वप्रतिपादनार्थंहेतुकं काव्यलिंगमलंकारः ।

५१–रुचिधाम्नि भर्तरि भृशं विमलाः परलोकमभ्युपगते विविशुः ।
ज्वलनं त्विषः कथमिवेतरथा सुलभोऽन्यजन्मनि स एव पतिः ॥९-१३

अत्राग्निप्रवेशो युक्त इति प्रतिपत्तेर्वाक्यार्थहेतुकं काव्यलिंगमलंकारः

५२–स्थगिताम्बरक्षितितले परितस्तिमिरे जनस्य दृशमन्धयति ।
दधिरे रसाञ्जनमपूर्वमतः प्रियवेश्मवर्त्म सुदृशो ददृशुः ॥९-२१

अत्र रसाञ्जनवाक्यार्थेन प्रियवेश्मदर्शनवाक्यार्थहेतुकं काव्यलिंगम-
लंकारः ।

५३–अवधीर्य धैर्यकलिता दयितं विदधे विरोधमथ तेन सह ।
तव गोप्यते किमिव कर्तुमिदं न सहास्मि साहसमसाहसिकी ॥९-५

अत्र विशेषणगत्या साहसासहनहेतुत्वोक्तेः पदार्थहेतुकं काव्यलिंगम्

५४–कान्तकान्तवदनप्रतिबिम्बे भग्नबालसहकारसुगन्धौ ।
स्वादुनि प्रणदितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः ॥१०-३

अत्र विशेषभावेन हेतोः कथनात् पदार्थहेतुकं काव्यलिंगमलंकारः ।

५५–दत्तमात्तमदनं दयितेन व्याप्तमातिशयिकेन रसेन ।
सस्वदे मुखसुरं प्रमदाभ्यो नाम रूढिमपि च व्युदपादि ॥१०-२३

अत्र पूर्ववाक्यार्थस्योत्तरवाक्यार्थहेतुत्वात् काव्यलिंगम् ।

६२–योषितामतितरां नखलूनं गात्रमुज्ज्वलतया न खलूनम् ।
शोभनाशु हृदयं नयदूना रागवृद्धिमकरोन्न यदूनाम् ॥ १०-९०

औज्ज्वल्यस्य विशेषणगतया रागवृद्धिहेतुत्वात् काव्यलिंगमलंकारः ।

६३–रतिरभसविलासाभ्यासतान्तं न याव-
न्नयनयुगममीलत्तावदेवाहतोऽसौ ।
रजनिविरतिशंसी कामिनीनां भविष्य-
द्विरहविहितनिद्राभङ्गमुच्चैर्मृदङ्गः ॥ ११-२

अत्र नेत्रनिमीलननिद्राभंगहेतुत्वाद् पदार्थहेतुकं काव्यलिंगम् ।

६४–विपुलतरनितम्बाभोगरुद्धे रमण्याः
शयितुमनधिगच्छञ्जीवितेशोऽवकाशम् ।
रतिपरिचयनश्यन्नैद्रतन्द्रः कथंचि-
द्गमयति शयनीये शर्वरीं किं करोतु ॥ ११-५

तादृग्रोधस्य विशेषणगतया हेतुत्वात् काव्यलिंगमलंकारः ।

६५–दधदसकलमेकं खण्डितामानमद्भिः
श्रियमपरमपूर्णामुच्छ्वसद्भिः पलाशैः ।
कलरवमुपगीते षट्पदौघेन धत्त
कुमुदकमलषण्डे तुल्यरूपामवस्थाम् ॥ ११-१५

अत्रोभयविशेषणानां तुल्यावस्थाधारणहेतुकत्वात् काव्यलिंगम् ।

६६–सरभसपरिरम्भारम्भसंरम्भभाजा
यदधिनिशमपास्तं वल्लभेनाङ्गनायाः ।
वसनमपि निशान्ते नेष्यते तत्प्रदातुं
रथचरणविशालश्रोणिलोलेक्षणेन ॥ ११-२३

अत्र वसनाऽप्रतिदानस्य श्रोणीक्षणलौल्यहेतुकत्वात् काव्यलिंगम् ।

६७–नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम् ।
प्रतिदिशमपरस्त्रीसङ्गमो विसर्प
न्नवपरिमलगन्धः केन शक्यो वरीतुम् ॥ ११-३४

अत्र विशेषणगत्या पदार्थस्य हेतोरुक्तौ काव्यलिंगम् ।

६८–मदमदनविकासस्पष्टधाष्ट्योदयाना
रतिभरहृबिकीर्णैर्भूं पर्णैरचितेपु ।
विदधति न गृहेषूत्फुल्लपुष्पोपहारं
विफलविनयरम्या. कामिनीनां वयस्या ॥ ११ ३६

अत्रोत्फुल्लपुष्पोपहारविधानाभाव प्रति हेतौ पदार्थहेतुकं काव्यलिंगम् ।

६९–सरसनखपदान्तर्ग्रन्थबन्धप्रमोक्ष
प्रणयिनि विदधाने योषितामुल्लसन्त्याः ।
विदधति दशनानां नीलरत्नाविष्कृतानां-
मभिनवरविभानः पद्मरागानुकारम् ॥ ११-५४

रविभासामारुण्यप्रतिपादकाऽभिनवविशेषणप्रसादलब्ध इति काव्यलिंगम् ।

७०–अविरतदयितानाङ्गसङ्गमचारितेन
द्युतिमभिनवमातृप्तकान्तिना कुङ्कुमेन ।
कनकनिकषरेखाकोमल कामिनीना
भवति वपुरवातच्छायमेवातपेऽपि ॥ ११-५५

अत्र छायाऽव्याप्तिहेतुत्वादुपमासंकीर्णं काव्यलिंगम् ।

७१–इत्य रथाश्वेभनिपादिना प्रगे गणो नृपाणामथ तोरणाद्बहि. ।
प्रस्थानकालक्षमवेपकल्पनाकृतक्षणक्षेपमुदैक्षताच्युतम् ॥ १२-१

अत्राच्युतविलम्बस्य क्षणक्षेपहेतुत्वात्पदार्थहेतुकं काव्यलिंगम् ।

७२–त्रस्तौ समासन्नकरेणुसूत्कृतान्नियन्तरि व्याकुलमुक्तरज्जुके ।
शिम्रावरोधाङ्गनमुत्पथेन गां विलङ्घ्य लघ्वी करभौ बभञ्जतु ॥१२-२४

अत्र त्रासस्य भञ्जनहेतुत्वात्पदार्थहेतुकं काव्यलिंगम् ।

७३–घूर्णं द्रुसंक्षोभविदारितोष्ट्रिकागलन्मधुस्राविततद्रवत्मनि ।
स्थाणौ निषद्धिम्यनति सत्त्व पुर शुशोच लाभाय कृतक्रयो वणिक् ॥१२ २.

अत्र मधुस्रावघनव्ययोर्विशेषणगत्या शोकहेतुत्वात् काव्यलिगम् ।

७४–वन्येभदानानिलगन्धदुर्धराः क्षणं तरुच्छेदविनोदितक्रुध. ।
व्यालद्विपा यन्तृभिरुन्मदिष्णव कथंचिदारादपथेन निन्यिरे ॥१२-२८

अत्र द्विपविशेषणानां तदुपमेयहेतुकत्वात्काव्यलिंगम् ।

७५–तैर्वैजयन्तीवनराजिराजिभिर्गिरिप्रतिस्पर्धिमहामतङ्गजै. ।
बहुधः प्रसर्पज्जनतामदोद्धतैर्मुखो वलैरन्तरयावभूविरे ॥१२-२६

अत्र हेतुत्वात्तदंगभूतोपमासंकीर्णं पदार्थहेतुक काव्यलिंगम् ।

७६–स व्रीहिणां यावदपासितुं गताः
शुकान्मृगैस्तावदुपद्रुतश्रियाम् ।
केदारिकाणामभितः समाकुला
सहासमालोकयति स्म गोपिका ॥१२-४२

अत्र सहासवलोकनस्य विशेषणगत्या पदार्थहेतुकत्वात्काव्यलिंगम् ।

७७–लीलाचलत्स्त्रीचरणारुणोत्पलस्खलत्तुलाकोटिनिनादकोमलः ।
शौरेरुपानूनमुपाहरन्मन. स्वनान्तरादुन्मदसारसारवः ॥१२-४४

अत्र लीलेत्यादिविशेषणार्थहेतुकत्वादुपमासंकीर्णकाव्यलिगम् ।

७८—उल्लेखनिर्घूर्णमहीरुहा ध्वजैर्जनौघरुद्धोद्धतसिन्धुरंहसाम् ।
नागैरधिक्षिप्तमहागिरि मुहुर्वनं बभूवोपरि तन्मदीकृताम् ॥१२-५३

अत्र विशेषणवैभवात् हेतोरुक्ते श्लेषप्रतिभोत्थापितकाव्यलिङ्गम् ।

७९—यशैरनल्पीतवपुमुज्झतो गता न हर्म्यं प्रियमातपत्रजाम् ।
दूरेऽभवन्भोजबलस्य गच्छतः शैलोपमातीतगजस्य निम्नगाः ॥१२-६१

विशेषणपदार्थहेतुकत्वात् श्लेषमूलातिशयोक्त्यनुप्राणितं काव्यलिङ्गम् ।

८०—स्निग्धाञ्जनश्यामतनूनि निर्वृतं निरन्तरा नारिणा कदम्बकैः ।
सेना सुधाक्षालितसौधसम्पदा पुरां बहूनां परभागमाप सा ॥१२-६२

अत्र विशेषणगत्या श्यामवरिवदम्बवर्णन्तर्यस्य हेतुत्वात्काव्यलिङ्गम् ।

८१—प्रायामवद्भिः परिखा पटाशतैश्च कृताट्टालकपङ्क्तिभिश्चलैः ।
दूष्यैर्जितोदग्रगृहाणि सा चमूरतीत्य भूयांसि पुराण्यवर्तत ॥१२-६५

श्लेषमूलातिशयोक्त्युत्थापित पदार्थहेतुक काव्यलिङ्गम् ।

८२—विदलितमहाद्रुमामुद्रणा विषाणविघट्टनै-
रलघुचरणाकृष्टग्राहा विषाणिभिरुन्मदैः ।
सपदि सरित सा श्रीभर्तुर्बृहद्रथमण्डल-
स्तनितमनिशामुत्तङ्घ्यैना जगाम वरूथिनी ॥१२-७७

अत्र जयस्य विशेषणगत्या कूलदलनादिहेतुत्वात्काव्यलिङ्गम् ।

८३—रभसप्रवृत्ततुरगाद्रिदुन्दुभिध्वनिभिर्जनस्य बधिरीकृतश्रुते. ।
सममादि वक्तुमितरेतरोष्मनतयाप्रकृतार्थगोपमथ हस्तसंज्ञया ॥१३-३

अत्र बधिरीकरणस्य हस्तसंज्ञया वदनहेतुत्वात् काव्यलिङ्गम् ।

८४–मसमीक्षुतुं क्षितिपतेरपेक्षया परितः प्रकल्पितनिकेतनं बहिः ।
उपरुध्यमानमिव भूभृता वनं पुटभेदनं दनुसुतारिरैक्षत ॥१३-२६

अत्रोपरोधनभावना प्रति हेतौ पदार्थहेतुकं काव्यलिंगम् ।

८५–अनमेर्मदेन मुदुरः नागरिकं स्वगृहान्प्रति प्रतियगु शनैः शनैः ।
अनघुप्रमारिनविलोचनाञ्जनिद्रुतपीनमाधवरसौघनिर्भरैः ॥१३-४८

अत्र माधवरसौघनिर्भरत्वमिति हेतुत्वात्कार्यहेतुकं काव्यलिंगम् ।

८६–बहुपि प्रियमयं तव ब्रुवन्न बजत्यनृतवादितां जनः ।
संभवन्ति यददोषदूषिते सार्वं सर्वगुणसंपदस्त्वयि ॥१४-४

अत्रोत्तरवाक्यार्थेन पूर्ववाक्यार्थहेतुत्वात्काव्यलिंगम् ।

८७–शासनेऽपि गुरुणि व्यवस्थितं कृत्यवस्तुषु नियुङ्क्ष्व कामतः ।
त्वत्प्रयोजनधनं धनंजयादन्य एष इति मा स्म मावगाः ॥१४-१५

अत्र वाक्यार्थयोर्हेतुहेतुमद्भावाद् वाक्यार्थहेतुकं काव्यलिंगम् ।

८८–नाञ्जसा निगदितुं विभक्तिभिर्व्यक्तिभिश्च निखिलाभिरागमे ।
तत्र कर्मणि विपर्ययानमन् मन्त्रमूहकुशला प्रयोगिणः ॥१४-२३

अत्र नाञ्जसेति मन्त्रविपरिणामनहेतुत्वात्पदार्थहेतुकं काव्यलिंगम् ।

८९–संशयाय दधतोः सरूपतां दूरभिन्नफलयोः क्रियां प्रति ।
शब्दशासनविदः समासयोर्विग्रहं व्यवससुः स्वरेण ते ॥१४-२४

अत्र विग्रहस्य व्यवसायहेतुत्वात् पदार्थहेतुकं काव्यलिंगम् ।

९०–तत्र मन्त्रपवितं हविः क्रतावश्नतो न वपुरेव केवलम् ।
वर्णसंपदमतिस्फुटां दधन्नाम भोज्ज्वलमभूद्द्विजन्मनः ॥१४-२६

अत्र भोजनस्याशनत इति हेतुत्वात् पदार्थहेतुकं काव्यलिंगम् ।

९१—स्वर्णमुष्णमुचितं दधच्छिखी यद्ददाह हविरद्भुतं न तत् ।
गन्धतोऽपि हुतहव्यसम्भवाद्देहिनामदहदोघमंहसाम् १४-२७

अत्रोष्णस्वर्णधारणस्य हविर्दाहहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ।

९२—निर्जिताखिलमहार्णवौषधिस्यन्दसारममृतं ववल्गिरे ।
नाकिनः कथमपि प्रतीक्षितुं हूयमानमनले विषेहिरे ॥१४-२९

अत्र विशेषणपदार्थस्य वल्गनहेतुत्वात्काव्यलिङ्गम् ।

९३—प्राशुराशु हवनीयमत्र यत्तेन दीर्घममरत्वमध्यगुः ।
उद्धतानधिकमेधितौजसो दानवांश्च विबुधा विजिग्यिरे ॥१४-३१

एधितौजस्त्वस्य विशेषणगत्या विजयहेतुत्वात् काव्यलिङ्गम् ।

९४—नापचारमगमन्क्वचित्क्रियाः सर्वमत्र समपादि साधनम् ।
अत्यशेरत परस्परं धियः सर्त्विजां नरपतेश्च संपदः ॥१४-३२

अत्र वाक्यार्थस्य साधनसम्पत्तिरिति वाक्यार्थहेतुकं काव्यलिङ्गम् ।

९५—किं नु चित्रमधिवेदि नृपतिर्दक्षयन्द्विजगणानपूपुजत् ।
राजतः पुपुषिरे निरेनसः प्राप्य तेऽपि विमलं प्रतिग्रहम् ॥१४-३५

विरोधवाक्यार्थहेतुककाव्यलिङ्गयोरङ्गाङ्गिभावेन संकरः ।

९६—तत्प्रणीतमननानुपेयुषा द्रष्टुमाहवनमग्रजन्मनाम् ।
आतिथेयमनिवारितार्थिनः कर्तुमाश्रमगुरोः स नाशकत् ॥१४-३८

अत्र श्रमनिषेधहेतुत्वात्काव्यलिङ्गमनुप्रासेन संसृज्यते ।

९७—रक्षितारमिति तत्र कर्मणि न्यस्य दुष्टदमनक्षमं हरिम् ।
अक्षतानि निरवर्तयत्तदा दानहोमयजनानि नृपतिः ॥१४-५१

अत्र हरे रक्षाधिकारहेतुत्वादक्षतहेतुत्वाद् पदार्थहेतुकं काव्यलिङ्गम् ।

९८–प्राभजन्ति गुणिन पृथक्पृथक्पार्थं सत्कृतिमकृत्रिमाममी ।
एक एव गुणवत्तमोऽथवा पूज्य इत्ययमपीष्यते विधि. ॥१४-५७

अत्र स्नातकादीना पूज्यत्वे गुणो हेतुरिति काव्यलिंगम् ।

९९–मर्त्यमात्रमवदीधरद्भवान्मैनमानमितदैत्यदानवम् ।
अ श एष जननान्निवर्तिनो वेधस प्रतिजन कृतस्थितेः ॥१४-५९

न मर्त्यमात्रमिति प्रतिपत्तेर्वाक्येन हेतुकथनात् काव्यलिंगम् ।

१००–पद्मभूरिति सृजञ्जगद्रजः सत्त्वमच्युत इति स्थितिं नयन् ।
संहरन्हर इति श्रितस्तमस्त्रैधमेष भजति त्रिभिर्गुणैः ॥१४-६१

अत्र सत्त्वादिगुणयोगस्य त्रैविध्यहेतुत्वात् पदार्थहेतुकं काव्यलिंगम्

१०१–सर्ववेदिनमनादिमास्थितं देहिनामनुजिघृक्षया वपु ।
क्लेशकर्मफलभोगवर्जितं पुंविशेषममुमीश्वर विदु ॥१४-६२

अत्र विशेषणगत्या पु विशेषहेतुत्वात् काव्यलिंगम् ।

१०२–सम्प्रदायविगमादुपेयुषीरेष नाशमविनाशिविग्रह ।
स्मर्तुमप्रतिहतस्मृति श्रुतीर्दत्त इत्यभवदत्रिगोत्रज ॥१४-७९

अत्र श्रुतिस्मृतिहेतुत्वोक्त्या पदार्थहेतुकं काव्यलिंगम् ।

१०३–निग्रहन्तुममरेशविद्विषामर्थितः स्वयमथ स्वयम्भुवा ।
सम्प्रति श्रयति सूनुतामय कश्यपस्य वसुदेवरूपिणः ॥१४-८२

अत्र वसुदेवपुत्रत्वप्राप्तिहेतुत्वात्पदार्थहेतुकं काव्यलिंगम् ।

१०४–धन्योऽसि यस्य हरिरेष समक्ष एव
दूरादपि क्रतुषु यज्वभिरिज्यते यः ।

दत्वार्धमत्रभवते भुवनेषु याव-
न्तमारमण्डलमवाप्नुहि साधुवादम् ॥१४-८७

अत्र वाक्यार्थहेतुत्वात्वाक्यहेतुक काव्यलिंगम् ।

१०५–क्षणमाक्षिपद्धटितशैलशिखरकठिनाममण्डल ।
स्तम्भमुपहितविधृतिमनाविधिवावधनिनसमस्तसमदम् ॥१५ ६

अत्र स्तम्भाक्षेपहेतुत्वात्काव्यलिंगम् तच्च पदार्थहेतुकम् ।

१०६–इति चुक्रुधे भृगमनेन ननु महदवाप्य विप्रियम् ।
याति विकृतिमपि संवृतिमत्किमु यन्निसर्गनिरवग्रह मन ॥१५-११

अत्र वाक्यार्थ हेतुत्वात्वाक्यार्थहेतुक काव्यलिंगम् ।

१०७–यदपूपुजस्त्वमिह पार्थ मुरजितमपूजित सताम् ।
प्रेम विलसति महत्तदहो दयित जन खलु गुणीति मन्यते ॥१५-१४

अत्र प्रेमविलसितस्योत्तरवाक्यार्थहेतुक काव्यलिंगम् ।

१०८–यदि वाचनीयतम एष किमपि भवता पृथासुता ।
शौरिरवनिपतिभिर्निखिलैरवमाननायमिह किं निमन्त्रितः ॥१५ १८

अत्र पूर्ववाक्यार्थहेतुकत्वात्काव्यलिंगमलङ्कार ।

१०९–अथवा न धर्ममनुबोधसमयमवयात बालिशाः ।
वामनयमिह वृद्धपलितो हतबुद्धिरप्रणिहित नरित्नुनः । १५-१६

अत्र धर्मज्ञानाहेतुत्वादनेकपदार्थहेतुक काव्यलिंगम् ।

११०–अवनीभृता त्वमपहाय गणमतिजड ममुन्नतम् ।
नीचि नियतमिह यच्चपलो निरन स्फुट नवमि निम्नगामुन । १५ २१

अत्र चतुर्थपाद देस्य पूर्ववाक्यार्थहेतुकत्वात काव्यलिगम् ।

१११-प्रतिपत्तुमङ्ग घटते च न तव नृपयोग्यमर्हणम् ।
कृष्ण कलय ननु कोऽहमिति स्फुटमापदा पदमनात्मवेदिता ॥१५-२२

अत्र निजस्वरूप चिन्त्यमिति हेतुमद्भावात् काव्यलिंगम् ।

११२-यमुरस्त्वया न्यवधि कोऽपि मधुरिति कथं प्रतीयते ।
दण्डदलितसरघः प्रयने मधुसूदनस्त्वमिति मूदयन्मघु ॥१५-२३

अत्र मधुसूदनसंज्ञायामिति वाक्यार्थहेतुक काव्यलिंगम् ।

११३-त्वमशक्नुवन्नशुभकर्मनिरत परिपाकदारुणम् ।
जैनुनकुशलमतिर्नरकं यशसेऽधिलोकमजय. सुतं भुवः ॥१५-३१

अत्र हरेर्नरकासुरविजयप्रकृतिहेतुत्वात् पदार्थहेतुकं काव्यलिंगम् ।

११४-यदि नाङ्गनेति मतिरस्य मृदुरजनि पूतना प्रति ।
स्तन्यमघृणमनस. पिवतः किन्न धर्मतो भवति सा जनन्यपि ॥१५-३६

अत्र स्तनपानस्य विशेषणगतया जननीत्वात् काव्यलिंगम् ।

११५-शकटव्युदासतरुभङ्गधरणिधरधारणादिकम् ।
कर्म यदयमकरोत्तरलः स्थिरचेतसा क इव तेन विस्मयः ॥१५-३७

अत्र विस्मयनिषेधहेतुत्वात् काव्यलिंगम् वृत्यनुप्रासेन संसृज्यते ।

११६-अयमुग्रसेनतनयस्य नृपशुरपरः पशूनवन् ।
स्वामिवधमसुकर पुरुषं कुरुते स्म यत्परममेतदद्भुतम् ॥१५-३८

अत्र कंसकृष्णयो. स्वामिभृत्यभावहेतुत्वात् काव्यलिंगम् ।

११७-न च तं तदेति शपमानमपि यदुनृपाः प्रचुक्रुधुः ।
शौरिसमयनिगृहीतधिय. प्रभुचित्तमेव हि जनोऽनुवर्तते ॥१५-४१

अत्र क्रोधाभावहेतुत्वात् काव्यलिंगमर्थान्तरन्यासेन संकीर्यते ।

११८–विहितागसो मुहुरलङ्घ्यनिजवचनदामसंयत ।
तस्य गतिद इति नम्रवदन मनसा समाख्यदपराधमच्युतः ॥१५-४२

अत्र तात्कालिकापराधगणनाहेतुत्वात् काव्यलिङ्गम् ।

११९ अथ गौरवेण परिवादमात्मनि गणय्य तस्य महात्मनः ।
प्राह मुररिपुरितरस्कारगुणितः स्म वाचमिति जाह्नवीसुतः ॥१५-४४

अत्र क्रोधस्य विशेषणगत्या वचनहेतुत्वात् काव्यलिङ्गम् ।

१२०–प्रतिघः कुतोऽपि समुपेत्य नरपतिगणं समाश्रयत् ।
जामिहरणजनितानुशयः चतुरावचार निज एव रुक्मिणः ॥१५-४३

अथानुशयस्य विशेषणगत्या क्रोधोद्दीपनहेतुत्वात् काव्यलिङ्गम् ।

१२१–कुपितेषु राजसु तथापि रथचरणपाणिपूजया ।
चित्तकलितकलहागमनो मुदमाहुकिः सुहृदिवाधिका दधौ ॥१५-४५

अत्र चित्तकलितेति पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम् ।

१२२–विवृतोरुदन्तुरनिधेरु सरनसदं निदिरसता ।
हन्तुमखिलनृपतीनमुना दलने विलम्बिनि निजे विचम्भले ॥१५-४६

अत्र दलनं मनस्य विशेषणगत्या स्खलनहेतुत्वात्काव्यलिङ्गम्

१२३–स्मशनाद्युदस्थुरथ युद्धमनुचितनियोगमिलापुरुषाः ।
सान्द्रपुष्टकिरणोच्छलितस्फटिकासनः सदसि चेदिभूपतिः ॥१५-५१

अत्र युद्धाभिलाषुकस्य विशेषणगत्योत्थानहेतुत्वात्काव्यलिङ्गम् ।

१२४–गृहमागताय कृपया च कथमपि निसर्गदक्षिणाः ।
क्षान्तिमहितमनसो जननीस्वसुतान्मजाय शुशुभुर्न पाण्डवाः ॥१५-६८

अत्रान्यागतत्वादिविशेषणानां ज्ञानिमत्त्वात् काव्यलिङ्गम् ।

१२५–विशिखान्तराण्यतिपपात मर्पदि जवनं स वाजिभि ।
द्रष्टुमलघुरभसापतिता वनिताश्चकार न सकामचेतस ॥१५-३०

विशिखान्तराण्यति वाक्यार्थहेतुक काव्यलिंगमत्र ।

१२६–रणमंमदोदयविकासिवलकलकलाकुलीकृते ।
शारिमशकदधिरोपयितुं द्विरदे मदच्युनि जन कथचन ॥१५-७७

अत्र मदहेतुत्वात् शारिदुरारोपत्वहेतुत्वाच्च काव्यलिंगद्वयम् ।

१२७–परितश्च धौतनुम्वरुवर्मविलसदहिमाशुमण्डलाः ।
तेनुरतनुवपुष पृथिवी स्फुटलक्ष्यतेजस इवात्मजा श्रिय. ॥१५-७८

स्फुटलक्ष्यतेजस्कत्व प्रति धौतेत्यादिपदार्थहेतुक काव्यलिंगम् ।

१२८–दयिताय मासवमुदस्तमपतदवमादिनः करात् ।
कास्यमुपहिततरोनपतद्भ्रमरौयमारगुरु राजयोषित ॥१५-८१

अत्रावसादभारगौरवयो. कास्यपात्रपातहेतुत्वात्काव्यलिंगम् ।

१२९–न मुमोच लोचनजलानि दयितजयमङ्गलैषिणी ।
यातमवनिमवसन्नभुजाग्र गलद्विवेद वलय विलासिनी ॥१५-८५

अत्रावसादस्य विशेषणगत्या वलयपातहेतुत्वात्काव्यलिंगम् ।

१३०–समरान्मुखे नृपगणेऽपि तदनुमरणोद्यतेक्षणे. ।
दीनपरिजनकृताञ्जलो न भटोजनः स्थिरमना विचक्लमे ॥१५-९३

अत्र मरणोद्योगस्य विशेषणगत्यावनैव्यहेतुत्वात् काव्यलिगम् ।

१३१–सम्प्रत्युपेया. कुशली पुनर्युधः सस्नेहमाशीरिति भर्तुरीरिता ।
सद्य प्रसह्य द्विसयेन नेत्रयो. प्रत्याचचक्षे गलता मटस्त्रिया ॥१५-९७

अत्राश्रुपातस्य नेत्रविशेषणद्वारा आशी॰प्रत्याख्याने हेतौ काव्यलिगम् ।

१३२- काचित्कीर्णा रजोभिर्दिवमनुविदधे भिन्नवक्त्रेन्दुलक्ष्मी-
रश्रीका काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः ।
भ्रेमुर्वात्या इवान्याः प्रतिपदमपरा भूमिवत्कम्पमापुः
प्रस्थाने पार्थिवानामशिवमिति पुरो भावि नार्यः शशंसुः ॥१५-९६

अत्र नारीणां रजआदाहादिवाक्यार्थहेतुकं काव्यलिङ्गम् ।

१३३-त्वयि भक्तिमता न सत्कृतः कुरुराजा गुरुरेव चेदिपः ।
प्रियमासमृगाधिपोज्झितः किमवद्यः करिकुम्भजो मणिः ॥१६-४५

अत्रोज्झनं प्रति प्रियमासपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम् ।

१३४-अहितः प्रधनाय माधवानहमाकारयितुं महीभृताः ।
न परेषु महौजसश्छलादपकुर्वन्ति मलिम्लुचा इव ॥१६-५२

छलादपकुर्वन्तीति वाक्यार्थहेतुकं काव्यलिङ्गम् ।

१३५-परिपाति स केवलं शिशूनिति तन्नामनि मा स्म विश्वसीः ।
तरुणानपि रक्षति क्षमी स शरण्यः शरणागतान्द्विषः ॥१६-५४

अत्र यतः शरण्यः अतः रक्षतीति पदार्थहेतुकं काव्यलिङ्गम् ।

१३६-विनिहत्य भवन्तमूर्जितश्रीर्युधि सद्यः शिशुपालतां यथार्थाम् ।
रुदतां भवदङ्गनागणानां करुणान्तःकरणः करिष्यतेऽसौ ॥१६-८५

अत्र शिशुपालनहेतुत्वादनेकपदार्थहेतुकं काव्यलिङ्गम् ।

१३७-अकुप्यत श्वसनसमीरणाहतिस्फुटोष्मभिस्तनुवमनान्तमारुतैः ।
युधाजितः कृतपरितूर्णवीजनं पुनस्तरां वदनसरोजमग्निदत् ॥१७-६

अत्रोष्मविशेषणगत्या स्वेदहेतुत्वात्काव्यलिङ्गम् ।

१३८–जटोद्धृतश्रवणपथे दिदीवमा चमूरवे विनति सुगद्रिबदरा ।
अनयैकैरजनि विदग्धकामिनीरतान्तरक्त्रापितविलासकौशलं ॥१७-३

अत्र श्रोत्रजाड्यस्य क्त्रणितानयैक्यहेतुत्वात् काव्यलिंगम् ।

१३९–अरातिभिर्युधि सहयुध्वनो हताश्रिपृथव श्रुतरणतूर्यनि स्वना ।
अकुर्वत प्रथममनागमोचित चिरोज्झिन सुरगणिका प्रसाधनम् ॥१७-३

अत्र स्वयंवरणतूर्यश्रवणयो. प्रसाधनहेतुत्वात् काव्यलिंगम् ।

१४०–विषाङ्गिभिर्दमितरेतरं क्वचित्तुरगमैरुपरि निन्द्वनिर्गमा ।
चलाचलैरनुपदमाहताः खुरैर्विवभ्रमुश्चिरमध एव धूलय ॥१७-५३

अत्र निर्गमरोधेन विशेषणगत्या परिहारात्काव्यलिंगम् ।

१४१-निरीक्षितुं विमति समेत्य कौतुकात्तराजम समग्मुने महीभृताम् ।
रजस्तावनिमिरलोचनोत्पलव्यथाकृति त्रिदशगणं पनाय्यत । १७ ६

अत्र अनिमिषपदस्यार्थो हेतुरिति पदार्थहेतुकाव्यलिंगम् ।

१४२–समस्थलीकृतविवरेण पूरिता महीभृता बलरजमा महागुहाः ।
रहस्त्रादिधुरबद्धरतार्थिना नम सदामुपकरणीयतां ययु ॥१७-६६

अत्र रजःपूरणस्योपकारकहेतुत्वात्काव्यलिंगम् ।

१४३–मदाम्भसा परिगलितेन सप्तधा गजाञ्जन दमितरजश्चयानय ।
उपर्यवस्थितघनपांसुमण्डलानलोकयत्ततपटमण्डपानिव ॥१७-६८

अत्रोपरिविततपटमण्डत्वं प्रत्युपरीत्यादिपदस्यार्थो हेतुरिति काव्यलिंगम् ।

१४४–रथ्याघोषैर्बृंहणैर्वारणानामैक्यं गच्छन्वाजिना ह्रेषया च ।
व्योमव्यापी संतत दुन्दुभीनामव्यक्तोऽभूदीर्णितेव प्रणाद ॥१८-३

अत्रैक्यागमनस्य विशेषणमत्याव्यक्तहेतुत्वात् काव्यलिंगम् ।

१५२–वाणाशिलारोहशून्यासनानां प्रक्रान्तानामन्यमैन्यैर्ग्रहीतुम् ।
मंरब्धानां भ्राम्यतामाजिभूमौ वारी वारैः सस्मरे वारणानाम् ।।१८-५६

अत्र शून्यासनत्वादीनां वागीस्मरणहेतुत्वात् काव्यलिंगम् ।

१५३–कश्चिन्मूर्च्छामित्य गाढप्रहार सिक्तः शीतैः शीकरैर्वारणस्य ।
उच्छ्वास प्रस्थिता त जिघृक्षुर्व्यर्थाकृता नाकनारी मुमूर्च्छ ।।१८-५८

अत्र नाकनारीमूर्च्छाहेतुत्वात् काव्यलिंगम् तच्चातिशयोक्तिसंकीर्णम् ।

१५४–त्यक्तप्राणं संयुगे हस्तिनीभ्या वीक्ष्य प्रेम्णा तत्क्षणादुद्गतासुः ।
प्राप्याखण्ड देवभूय सतीत्वादाशिश्लेष स्वैव कश्चित्पुरन्ध्री ।।१८-६१

अत्र सतीत्वस्य विशेषणगत्या देवभूयहेतुत्वात् काव्यलिंगम् ।

१५५–भोजो महौजाः कृत्वाघस्तत्क्षणादुत्तमौजसः ।
कुर्वन्नाजावमुख्यत्वमनयन्नाम मुख्यताम् ।।१९-१६

अत्रोत्तमौजसः प्रति अघ कृत्वेति पदार्थहेतुक काव्यलिंगम् ।

१५६–सोढुं तस्य द्विषो नालमपयोधरवारणम् ।
ऊर्णुनाव यतश्च धामपयोधरवारणम् । १९-२१

उत्तरवाक्यस्य पूर्ववाक्येन हेतुत्वात् वाक्यार्थहेतुकं काव्यलिंगम् ।

१५७–दिवमिच्छन्युधा गन्तुं कोमलामलसंपदम् ।
दधौ दधानोऽसिलता कोऽमलामलस पदम् ।।१९-३१

अत्र स्वर्गेच्छया नि शंकप्रस्थानहेतुत्वात् वाक्यार्थहेतुकाव्यलिंगम् ।

१५८–प्रभग्नवृत्ताः प्रसभादाकृष्टा यौवनोद्धतैः ।
चक्रन्दुरुच्चकैर्मुष्टिग्राह्यमध्या धनुर्लताः ।।१९-३५

अत्राकर्षणस्य क्रन्दनहेतुत्वात्काव्यलिंगम् ।

१५९–न तस्थौ भर्तृतः प्राप्तमानसंप्रतिपत्तिषु ।
रणांकमगेषु भयं मानस प्रति पत्तिषु ॥१९-३८

अत्र मानसं प्रतिपत्त्योर्भयाऽनवस्थानहेतुत्वात् पदार्थहेतुकं काव्यलिंगम् ।

१६०–द्विपद्विशसनच्छेदनिरस्तोरुयुगोऽपरः ।
भित्त्वाश्वासं रभसया बभूवारुणविग्रहः ॥१९-५३

अत्रारुणविग्रहभावहेतुत्वात्काव्यलिंगमुपमाश्लेषाभ्यां संकीर्यते ।

१६१–यावन्न सत्कृतिर्भर्तुः स्नेहस्यानृण्यमिच्छामि ।
अनर्पादितरैस्तावत्त्यजे युधि जीवितम् ॥१९-५७

सत्कारादिविशेषणैरयं काव्यलिंगम् ।

१६२–अयशोभिदुरालोके कोपधाम रणादृते ।
अयशोभिदुरा लोके कोपधा मरणादृते ॥१९-५८

अत्रायशोभिन्त्वादीनां जीवत्यागहेतुत्वात् काव्यलिंगं यमकेन संकीर्यते ।

१६३–असृग्जनोऽन्यक्षतिमानवमज्जवसादनम् ।
रक्षःपिशाच मुमुदे नवमज्जवसादनम् ॥१९-७८

अत्र मोदस्य वमनश्चावनार्थहेतुत्वाद् वाक्यार्थहेतुकं काव्यलिंगम् ।

१६४–वन्धो विपन्नेऽनेकेन नरेणेह तदन्तिके ।
अमोचि संग्ये घण्टाभिर्नरेणे हतदन्तिके ॥१९-८०

अत्र घण्टानामरणनहेतुत्वात् पदार्थहेतुकं काव्यलिंगम् ।

१६५–न केवलं जनैस्तस्य लघुसंधायिनो धनुः ।
मण्डलीकृतमेवान्नाद्बलमैक्षि द्विषामपि ॥१९-९७

अत्र मण्डलीकृतत्वं प्रति हेतुप्रतीयमानात् पदार्थहेतुकं काव्यलिंगम् ।

१६६–अशितारामु विव्याध द्विषतः स तनुत्रिणः।
दानेषु स्थूललक्ष्यत्वं न हि तस्य शरासने॥१९-९९

अत्राशितारादेर्विद्धत्वमिति वाक्यार्थहेतुक काव्यलिंगम्।

१६७–मुक्तानेकशरं प्राणानहरद्भूभुजां द्विषाम्।
तदीयं धनुरन्यस्य न हि मेहे सजीवताम्॥१९-१०१

पूर्ववाक्येन वाक्यार्थहेतुकं काव्यलिंगमत्र हेतुकथनात्।

१६८–मुहुरुल्लसितत्रिरेखमुच्चैर्मृदुरभ्रूयुगमीषणं दधानः।
समिताविति विक्रमानमृष्यन्गतभीराह्वत चेदिराण्मुरारिम्॥२०-१

अत्रामर्षस्य विशेषणगत्याह्वानहेतुत्वात्काव्यलिंगम्।

१६९–जनिताशनिशब्दशङ्कमुच्चैर्धनुरास्फालितमध्वनन्नृपेण।
चपलानिलचोद्यमानकल्पक्षयकालाग्निशिखानिभस्फुरज्ज्यम्॥२०-७

अत्रास्फालितमध्वनदिति पदार्थहेतुककाव्यलिंगस्य भेदः।

१७०–विहितादभुनलोकसृष्टिमाये जयमिच्छन्किल मायया मुरारौ।
भुवनक्षयकालयोगनिद्रं नृपतिः स्वापनमस्त्र माजहार॥२०-३२

अत्र हरिविशेषणैस्तस्य दुर्जयत्वसिद्धेरिति हेतुकथनात् काव्यलिंगम्।

१७१–गुरवोऽपि निषद्य यन्निदद्रुर्धनुषि क्ष्मापतयो न वाच्यमेतत्।
क्षयितापदि जाग्रतोऽपि नित्यं ननु तत्रैव हि तेऽभवन्निषण्णाः॥२०-३४

अत्र धनुराश्रयवाक्यार्थस्य हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिंगम्।

१७२–उचितस्वपनोऽपि नीरराशौ स्वबलाम्भोनिधिमध्यगस्तदानीम्।
भुवनत्रयकार्यजागरूकः स परं तत्र परः पुमानजागः॥२०-३६

अत्र तात्विकजागरणहेतुकत्वाद्विरोधाभाससंकीर्णं काव्यलिंगम्।

१७३–अथ सूर्यरुचीव तस्य दृष्टावुदभूत्कौस्तुभदर्पणं गतायाम् ।
पटु धाम ततो न चाद्भुतं तद्विभुरिन्द्वर्कविलोचनः किलासीत् ॥२०-३७

अत्र वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ।

१७४–प्रसृतिं प्रतिपादुकैरपादैरकल्पे भानुमतः पुनः प्रसर्तुम् ।
तमसोऽभिनदादपास्य मूर्च्छामुपजीवत्सहसैव जीवलोकः ॥२० ३९

अत्रोज्जीवनस्यार्ककरप्रसारहेतुकत्वात् पदार्थहेतुकं काव्यलिङ्गम् ।

१७५–गुरुतापविमुच्यदम्बुमुक्ताः क्षणमालम्ब्य हृदानुताम्रभासः ।
स्वमसारतया सदीभवन्त पुनरावारमवापुरम्बुवाहाः ॥२०-६२

अत्र गुरुत्वं प्रति विमुच्यदम्बुपदस्यार्थो हेतुरिति काव्यलिङ्गम् ।

# अनुमानम्

१–अनुवनमसितभ्रुवः सखीभिः सह पदवीमपरः पुरोगतायाः ।
उरसि सरसरागपादलेखाप्रतिमतयानुययावसंशयानः ॥७ २२

पादन्यासचिह्नसदृशत्वादित्यनुमानादनुमानमलङ्कारः ।

२–व्यक्तं बलीयान्यदि हेतुरागमादपूरयत्सा जलधिं न जाह्नवी ।
गाङ्गौघनिर्भर्त्सितशम्भुकन्धरासवर्णमर्णः कथमन्यथास्य तत् ॥१२-६६

विच्छित्तिवशाच्चानुमानमलंकारः ।

# यथासंख्यम्

१–विधृते दिवा सवयमा च पुर- परिपूर्णमण्डलविकाशभृति ।
हिमधाम्नि दर्पणतले च मुहु- स्वमुखश्रिय मृगदृशो ददृशु ॥९-५३

अत्र चन्द्रदर्पणयोर्युगवयमोश्च यथासंख्यमन्वयाद्यथासंख्यालंकार ।

२–अप्रसन्नमपराद्धरि पत्यौ कोपदीप्तमुररीकृतधैर्यम् ।
क्षालितं नु शमित नु वधूना द्रावित नु हृदय मधुवारैः ॥१०-१४

अत्राप्रसन्नत्वाद्युद्देशिनां क्षालितत्वाद्यनुद्देशिभिर्यथासंख्यालंकार. ।

३–क्षीबतामुपगतास्वनुवेलं तासु रोषपरितोषवतीषु ।
अग्रहीन्नु सशर धनुरुज्झामास नूज्झितनिषङ्गमनङ्ग. ॥१०-३४

रोषपरितोषयोर्धनुर्ग्रहणाभ्यां यथासंख्येनान्वयाद्यथासंख्यालंकारः ।

४–अमनोहरमता यतो जनस्य क्षणमालोकपथात्प्रभ. सदा सा ।
ररवे पिहिताहिमद्युतिर्योर्विनिशिरैरनङ्गितता च्युता धरित्री ॥२०-१५

जनस्य नम सदां यथासंख्यान्वयाद्यथासंख्यालंकार ।

---

# पर्यायः

१–प्रथममलघुमौक्तिकाभमासीच्छ्रमजलमुज्ज्वलगण्डमण्डलेषु ।
कठिनकुचतटाग्रपाति पश्चादथ शर्करता जगाम तासाम् ॥७-६६

एकस्य श्रमजलस्य क्रमेणानेकाश्रयसम्बन्धनिबन्धनात् पर्यायालंकारः ।

१–राहुस्त्रीस्तनयोरकारि सहसा येनादलयालिङ्गन-
व्यापारैकविनोददुर्ललितयो: कार्कश्यलक्ष्मीर्वृथा ।
तेनाक्रोशत एव तस्य मुरजित्तत्काललोलानल-
ज्वालापल्लवितेन मूर्धविकलं चक्रेण चक्रे वपुः ॥२०-७८

चक्रवर्णनेऽप्रस्तुताद्राहुस्त्रीकुचकार्कश्यवर्णनात्पर्यायालंकारः ।

---

# परिवृत्तिः

१–समुत्क्षिपन् यः पृथिवीभृतां वरं वरप्रदानस्य चकार शूलिनः ।
त्रसत्तुषाराद्रिसुतससम्भ्रमस्वयङ्ग्रहाश्लेषसुखेन निष्क्रयम् ॥१-५०

अत्र शैलचलनेन सुखवरदानयोर्विनिमयाद्विषमपरिवृत्तिरलंकारः ।

२–यां चन्द्रकैर्मदजलस्य महानदीनां
नेत्रश्रियं विकसतो विदधुर्गजेन्द्राः ।
तां प्रत्यवापुरविलम्बितमुत्तरन्तो
धौताङ्गलग्ननवनीलपयोजपत्रैः ॥५-४०

अत्र गजानां नदीनाञ्च समेनोक्त्या समपरिवृत्तिलंकारः ।

३–रोदोरन्ध्रं व्यश्नुवानानि लोलैरङ्गस्याऽन्तर्मापितैः स्थावराणि ।
कैश्चिद्गुर्वीमित्य संवत्सियद्यां क्रीणन्ति स्म प्राणमूल्यैर्यशांसि ॥१८-१५

अत्र न्यूनैः प्राणैस्ततोऽधिकयशः परिवर्तान्न्यूनपरिवृत्तिरलंकारः ।

# परिसंख्याः

१-यद्वानुदेवेनादीनमनादीनवमीरितम् ।
वचसस्तस्य सपदि क्रिया केवलमुत्तरम् ॥२-२२

अत्र सपदि क्रियैवोत्तरमिति आर्थीपरिसंख्यालंकारः ।

२-प्रीतिरस्य ददतोऽभवत्तथा येन तत्प्रियचिकीर्षवो नृपाः ।
स्पर्धितैरधिकमागमन्मुदं नाधिवेश्म निहितैरसायनैः ॥१४-४१

दानसंग्रहयोः प्रकृतयोः प्रीतेः संग्रहपरिहारेण शुद्धपरिसंख्यालंकारः ।

३-दर्शनानुपदमेव कामतः स्वं वनीपकजनैरधिगच्छति ।
प्रार्थनार्थरहितं तदाभवद्दीयतामिति वचोऽर्थसर्जने ॥१४-४८

प्रतिसर्जनार्थकथनादेकस्यानेकत्वप्रसक्तत्वात् शुद्धा परिसंख्या ।

४-आत्मनैव गुणदोषकोविदः किं न वेत्सि करणीयवस्तुषु ।
यत्तथापि न गुरूंश्च पृच्छसि त्वं क्रमोऽयमिति तत्र कारणम् ॥१४-५४

अत्र कर्तव्यार्थप्रश्नस्याज्ञानहेतुकत्वमिति प्रश्नपूर्विका परिसंख्या ।

५-अत्र यैव सकलेऽपि भाति मा प्रत्यगोपगुणवत्सुरर्हति ।
भूमिदेवनरदेवसङ्गमे पूर्वदेवरिपुरर्हणां हरिः ॥१४-५८

अन्यान्येषु पूजायां हरिर्भातीति व्यपोह्यमानात् शाब्दी परिसंख्या ।

---

# अर्थापत्तिः

१–अनन्यगुर्वास्तव केन केवलः पुराणमूर्तेर्महिमाऽवगम्यते ।
मनुष्यजन्माऽपि सुरासुरान्गुणैर्भवान्भवच्छेदकरैः करोत्यधः ॥१-३५

अत्राप्राकरणिकार्थाद् इति प्रकृतेरर्थस्यापतनादर्थापत्तिः ।

२–लघूकरिष्यन्नतिभारभङ्गुरामम् किल त्वं त्रिदिवादवातरः ।
उदूढलोकत्रितयेन साम्प्रतं गुरुर्धरित्री क्रियतेतरां त्वया ॥१-३६

अत्र दृढं यदं कथं स्यादिति नेत्यर्थान्तरापतनादर्थापत्तिरलङ्कारः ।

३–उपप्लुतं पातुमदो मदोद्धतैस्त्वमेव विश्वम्भर ! विश्वमीशिषे ।
ऋते रवेः क्षालयितुं क्षमेत कः क्षपातमस्काण्डमलीमसं नभः ॥१-३८

अत्र क्षमेत् कः इति नेत्यर्थान्तरपतनादर्थापत्तिः ।

४–मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी ।
क्रियासमभिहारेण विराध्यन्तं क्षमेत कः । २-४३

अत्र क्षमेत कः इति नेत्यप्राकरणिकस्यार्थस्यापतनादर्थापत्तिः ।

५–आच्छादितायतदिगम्बरमुच्चकैर्गा-
मा‌क्रम्य संस्थितमुदग्रविशालशृङ्गम् ।
मूर्ध्निस्खलत्तुहिनदीधितिकोटिमेन-
मुद्वीक्ष्य को भुवि न विस्मयते नगेशम् ॥४-१९

भवतोऽपि विस्मितत्वं सम्भवतीति अप्रकृतार्थस्यापतनादर्थापत्तिः ।

६–यदेतदस्यानुतटं विभाति वनं ततानेकतमालतालम् ।
न पुष्पिताऽत्र स्थगितार्करश्मावनन्तताने कतमा लताऽलम् ॥४ ३६

अत्र सर्वापि लता पुष्पितेति अर्थापतनादर्थापत्तिः ।

७–या बिभर्ति कलवल्लकीगुणस्वानमानमतिकालिमाऽलया ।
नात्र कान्तमुपगीतया तया स्वानमा नमति काऽलिमालया ।।४-५७

अत्र सर्वापि नमतीति अर्थस्यापतनादर्थापत्ति ।

८–निर्धूतधीतमपि बालकमुल्ललन्त
यन्ता क्रमेण परिसान्त्वनतर्जनाभिः ।
शिक्षाविशेषमनकैर्वशमानिनाय
साध्यं हि निश्चितधियां क्व न सिद्धिमेति ।।५-४७

अत्र प्राकरणिकार्थादप्राकरणिकस्यार्थस्यापतनादर्थापत्ति ।

९–कुसुमकार्मुककार्मुकसंहितद्रुतशिलीमुखखण्डितविग्रहाः ।
मरणमप्यपराः प्रतिपेदिरे किमु मुहुर्मुहुर्गतभर्तृकाः ।।६-१६

अप्रकृतार्थादप्रकृताभरणमित्यर्थस्यापतनादर्थापत्ति ।

१०–विगतरागगुणोऽपि जनो न कश्चलति वाति पयोदनभस्वति ।
अभिहितेऽलिभिरेवमिवोच्चकैरननृते ननृते नवपल्लवैः ।।६-३६

न कश्चलतीति प्रस्तुतस्यार्थादप्रस्तुतस्य नेत्यर्थस्यापतनादर्थापत्ति ।

११–शिशिरमासमपास्य गुणोऽस्य नः क इव शीतहरस्य कुचोष्मणः ।
इति धियास्तरुषः परिरेभिरे घनमतो नमनोऽनुमतान् प्रियाः ।।६-६५

अत्र को गुणः अपि तु कोऽपि नेत्यर्थान्तरापतनादर्थापत्तिः ।

१२–मुहुरिति वनविभ्रमाभिषङ्गादतमि तदा नितरां नितम्बिनीभिः ।
मृदुतरतनवोऽलसाः प्रकृत्या चिरमपि ताः किमुत प्रयासभाजः ।।७-६८

अत्राप्रकृतनैसर्गिकालस्य कथनेनागन्तुकस्य वर्णनादर्थापत्ति ।

१३–आस्माकी युवतिदृशामसौ तनोति
च्छायैव श्रियमनपायिनीं किमेभिः ।
मत्वैवं स्वगुणपिधानसाभ्यसूयै
पानीयैरिति विदधाविरेऽञ्जनानि ॥८-५०

श्रियमनपायिनीं किमेभिरित्यप्रस्तुतार्थापतनादर्थापत्तिः ।

१४–दयिताय मानपरयाऽपरया त्वरितं यथावगदितापि सखी ।
किमु चोदिता प्रियहितार्थकृतः कृतिनो भवन्ति सुहृदः सुहृदाम् ॥९-५७

अत्र किमुशब्देनाप्राकरणिकार्थस्यापतनादर्थापत्तिः ।

१५–दत्तमिष्टतमया मधु पत्युर्बाढमाप पिबतो रसवत्ताम् ।
यत्सुवर्णमुकुटांशुभिरामोऽचेतनाविरहितैरपि पीतम् ॥१०-६

यदचेतनानामपिपेयमित्यर्थस्यापतनादर्थापत्तिः ।

१६–मृदुनापि चैद्यवचनेन विकृतिमगमन्न माधवः ।
सत्यनियतवचसं वचसा सुजनं जनाश्चलयितुं क ईशते ॥१५-४०

क ईशते इत्यप्राकरणिकार्थादप्राकरणिकार्थस्यापतनादर्थापत्तिः ।

१७–निहतोन्मददुष्टकुञ्जराद्दधतो भूरि यशः क्रमार्जितम् ।
न बिभेति रणे हरेरपि क्षितिपः का गणनाऽस्य वृष्णिषु ॥१६-५३

न बिभेतीति कथनाद् प्रकृतन्यायार्थस्यापतनादर्थापत्तिः ।

## समुच्चयः

१–मुदमल्दमुदामपां मयूराः सहमायन्त नदी पपाट लाभे ।
अलिना रमतालिनी शिलीन्ध्रे मह स यन्तनदीपपाटलाभे ॥६-७२

मयूरमोदप्राप्त्याद्यनेककर्तृकाक्रियायौगपद्याद्भिन्नाधिकरणक्रिया-समुच्चयरूपः समुच्चयालङ्कारः ।

२–प्रागुरागु हवनीयमत्र यत्तेन दीर्घममरत्वमध्यगु ।
उद्धनानधिकमेधितौजसो दानवाश्च विबुधा विजिग्यिरे ॥१४-३१

चामरत्वामुरविजयक्रियासमुच्चय इति गुणक्रियायौगपद्यात् समुच्चयः ।

३–हरिमप्यमंमत तृणाय कुरुपतिमजीगणन्न वा ।
मानतुलितभुवनत्रितयाः सरितः सुतादविभपूर्नं भूभृतः ॥१५-६१

राजसु हयवमानाद्यनेकक्रियायौगपद्यात् समुच्चय. ।

४–रनानिच्छेदी क्षुत्प्रवधायो पीत्वा रक्तारिष्टं शोषिताजीर्णशेपम् ।
स्वादुंकारं कानलण्डोपदंशं क्रोष्टा डिम्बं व्यष्वणद्‌व्यस्वनच्च ॥१८-७७

व्यस्वनदवादयच्चेत्यनेकक्रियायौगपद्यात् समुच्चयः ।

---

## समाधिः

१-विगतसस्यजिघत्समघट्टयत्कलमगोपवधूर्न मृगव्रजम् ।
श्रुततदीरितकोमलगीतकध्वनिमिषेऽनिमिषेक्षणमग्रतः ॥६-४९

दण्डसाध्ये मृगनिवारणे काकतालीयन्यायेन मुख्यार्थस्य गानस्य कारणत्वकथनात् समाधिरलंकारः ।

२—आगतानगणितप्रतियातान् वल्लभानभिनिसारयितॄणाम् ।
प्राप चेतसि सविप्रतिसारे गुर्वतामवसरः स्मरवेगः ॥१०-२०

अभिसारकस्य पश्चात्तापकरणस्य मदयोगात्सौकर्योक्ते समाध्यलङ्कारः ।

---

## प्रत्यनीकम्

१ मम रूपकीर्तिमहरद्भुवि यस्तदनुप्रविष्टहृदयेयमिति ।
त्वयि मत्सरादिव निरस्तदयः सुतरां क्षिणोति खलु तां मदनः ॥९-६३

अत्र साक्षात्प्रतिपक्षभूतनायकपीडासमर्थस्य मदनस्य तदीयनायिका-
पीडनोक्त्या प्रत्यनीकालङ्कारः ।

२—यस्य किंचिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः ।
कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनापि बाधते ॥१४-७८

अत्र साक्षात्प्रतिपक्षहरिनिग्रहासामर्थ्यात् राहोस्तदीयेन्दुनिग्रहोक्त्या
प्रत्यनीकालङ्कारः ।

---

## प्रतीपम्

१—अननूनमिनांशुविरहेण शरदं प्राप्य विखण्डितायुधा ।
श्रयनर्गरनिरस्य तुलना यदि नामारभ्यत पयोमुचः ॥१६-६१

अत्र पयोमुचामुपमानानामुपमेयभावोक्ते प्रतीपालङ्कारः ।

# मीलितम्

१–अरमयन् भवनादचिरद्युतेः किल भयादवयातुमनिच्छव ।
यदुनरेन्द्रगणं तरुणीगणास्तमथ मन्मथमन्थरभाषिणः ॥६-४०

अत्राचिरद्युतेर्भयेन रागनिगूहनात्महजलक्ष्ममीलनालकारः ।

२–पानधौतनवयावकरागं सुभ्रुवो निभृतचुम्बनदक्षाः ।
प्रेयसामधररागरसेन स्वं किलाधरमुपालि ररञ्ज ॥१०-२६

अत्रागन्तुना रञ्जनेन सहजचुम्बननिगूहनादागन्तुकलक्ष्ममीलनालकारः।

३–मन्द्रैर्गजाना रथमण्डलस्वनैर्निजुह्नुवे तादृशमेव बृंहितम् ।
तारैर्वभूवे परभागलाभतः परिस्फुटैस्तेषु तुरगहेषितैः ॥१२-१५

अत्र मन्द्रैरथमण्डलस्वनैस्तादृशगजबृंहितगोपनादागन्तुकलक्ष्ममीलितालङ्कारः ।

---

# सामान्यम्

१–सावर्ण्यभाजां प्रतिमागतानां लक्ष्यैः स्मरापाण्डुतयाङ्गनानाम् ।
यस्यां कपोलैः कलधौतधामस्तम्भेषु भेजे मणिदर्पणश्रीः ॥३-४७

अत्र कलधौतधामस्तम्भेषु कपोलैः मणिदर्पणश्रीर्भेजे इति प्रकृताप्रकृतयोर्मेलनात्सामान्यम् ।

२–निर्धौते सति हरिचन्दने जलौघै-
रापाण्डोर्गतपरभागयाङ्गनायाः ।

अह्नाय स्तनकलशद्वयादुपेये
विच्छेदः सहृदयमेव हारयष्टया ।८-५१

अत्राङ्गनायाः स्तनकलशद्वयाद् सामान्यमलंकारः सावर्ण्यात् ।

३–प्रकटतरमिमं मा ज्ञासुरन्या रमण्यः
स्फुटमिति सविशङ्कं कान्तया तुल्यवर्णैः ।
चरणतलसरोजाक्रान्तिसंक्रान्तयासौ
वपुषि नखविलेखो लाक्षया रक्षितस्ते ॥११-३२

अत्र नखविलेखस्य लाक्षासावर्ण्यात्तदेकतापत्तेः सामान्यालंकारः ।

४–विशदाश्मकूटघटिताः क्षपाकृतः क्षणदासु यत्र च रुचैकतां गताः ।
गृहपङ्क्तयश्चिरमतीयिरे जनैस्तमसीव हस्तपरिमर्शसूचिताः ।।१३-५३

अत्र प्रकृतानां गुणसाम्यादप्रस्तुतचन्द्रिकैक्यावस्था सामान्यालंकारः ।

५–मातङ्गानां दन्तसंघट्टजन्मा हेमच्छेदच्छायचञ्चच्छिखाग्रः ।
लग्नोऽप्यग्निश्चामरेषु प्रकामं माञ्जिष्ठेषु व्यज्यते न स्म सैन्यैः ।।१८-३४

चामरेषु लग्नोऽप्यग्निर्न व्यज्यते इति प्रकृताप्रकृतमेलनात्सामान्यम् ।

---

## तद्गुणः

१–अजस्रमास्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया ।
पुरः प्रवालैरिव पूरितार्धया विभान्तमच्छस्फटिकाक्षमालया ।।१-९

अत्र स्वगुणत्यागेनान्यगुणस्वीकारलक्षणस्तद्गुणालंकारः ।

२–ककुभिकन्यावक्त्रान्तर्वामलब्धाधिवासया ।
मुखामोदं मदिरया कृतानुव्याघमुद्वमन् ॥२-२०

अत्र मुखेन स्वगन्धतिरोधानेन मदिराया अत्युत्कृष्टगुणात्तद्‌लंकारः ।

३–जगाद वदनच्छद्मपद्मपर्यन्तपातिनः ।
नयन्मधुलिहः श्वैत्यमुदग्रदशनांशुभिः ॥२-२१

अत्र मधुलिड्भिः स्वरूपं त्यक्त्वा शुभ्ररूपग्रहणात्तद्गुणालंकारः ।

४-विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या ।
रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः ॥४-१४

अत्र रथ्यानां स्वगुणत्यागेन गरुडाग्रजगुणग्रहणात्तद्गुणालंकारः ।

५–मातु नाम मुहूर्ता दशनाङ्कः पाटलो धवलगण्डतलेषु ।
दन्तवाससि समानगुणश्रीः संमुखोऽपि परभागमवाप ॥१० ८६

दशनाङ्कः दन्तवाससि गुणोत्कर्षकात्तद्गुणालंकारः ।

६–कनकाङ्गदद्युतिभिरस्य गमितमरुचलिरग्रताम् ।
क्रोधमयशिखिशिखापटलैः परितः परीतमिव बाहुमण्डलम् ॥१५-७

कनकस्यांगदयोः द्युतिभिः बाहुमण्डलस्य पिशंगवर्णस्वीकारात्तद्गुणः ।

७–शितितारकानुमितताम्रनयनमरुणीकृत क्रुधा ।
बाणवदनमुददीपि भिये जगतः सकीलमिव सूर्यमण्डलम् ॥१५-४८

अत्र नयनयोः स्वधावल्यत्यागेनारुण्यस्वीकारात् तद्गुणः ।

८–अवज्ञया यदहसदुच्चकैर्बलः समुल्लसद्दशनमयूखमण्डलः ।
रुषारुणीकृतमपि तेन तत्क्षणं निजं वपुः पुनरनयन्निजां रुचिम् ॥१७-४

अत्र वपुषः स्वधावल्यत्यागेन दन्तधावल्यस्वीकारात्तद्गुणालंकारः ।

# अतद्गुणः

१-उद्धतैर्निभृतमेकमनेकैश्छेदवन्मृगदृशामविरामैः ।
श्रूयते स्म मणितं कलकाञ्चीनूपुरध्वनिभिरक्षतमेव ॥१०-७६

मणितस्य तिरोधायकशब्दान्तरसद्भावेऽपि ताद्रूप्याऽनापत्तेरतद्गुणोऽलङ्कारः ।

---

# उत्तरम्

१-गतं तिरश्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः ।
पतत्यधो धाम विसारि सर्वतः किमेतदित्याकुलमीक्षितं जनैः ॥१-२

अत्र तीरश्चीनमित्यादि उत्तरवचनात् पूर्ववचनोन्नयनमुत्तरम् ।

---

# सूक्ष्मम्

१-पिदधानमन्वगुपगम्य दृशौ ब्रुवते जनाय वद कोऽयमिति ।
अभिधातुमध्यवससौ न गिरा पुलकैः प्रियं नववधूर्न्यगदत् ॥९-७६

अत्र प्रियज्ञानव्यापारस्य लज्जया अवर्णितस्य पुलकैः प्रकाशनात् इङ्गितार्थसूक्ष्मालङ्कारः ।

२-अपयाति सरोषया निरस्ते कृतकं कामिनि चुक्षुवे मृगाक्ष्या ।
कथयन्त्यपि सम्यगीर्ष्यतस्तेऽश्रुजलेन स्खलितं क्व गतोऽपि ॥९-८३

अत्र कारणाभावरूपोऽद्भुतेन क्षुते कृतकत्वस्य सलक्षणादिङ्गितार्थसूक्ष्मनामालङ्कारः ।

# वक्रोक्तिः

१–असुरस्त्वया न्यवधि कोऽपि मधुरिति कथं प्रतीयते ।
दण्डदलितमरुधः प्रथमे मधुसूदनस्त्वमिति सूदयन्मधु ॥१५-८३

अत्र मधुनामकदैत्यमर्दनार्थे प्रसिद्धस्य मधुसूदनशब्दस्य पुष्परसहरणार्थे योजनात् श्लेषवक्रोक्तिरलंकारः ।

---

# स्वभावोक्तिः

१–यां यां प्रियः प्रैक्षत कातराक्षी सा सा ह्रिया नम्रमुखी बभूव ।
निःशङ्कमन्याः सममाहितेर्ष्यास्तत्रान्तरे जघ्नुरमुं कटाक्षैः ॥३-१६

विशेषचातुर्यबोध्यत्वेन स्वाभाविकरूपवर्णनात् स्वभावोक्तिः ।

२–श्लिष्यद्भिरन्योन्यमुखाग्रसङ्गस्खलत्खलीनं हरिभिर्विलोलैः ।
परस्परोत्पीडितजानुभागा दुःखेन निश्चक्रमुरश्ववाराः ॥३-६६

केवलसहृदयजनसंवेद्यार्थभोः जातिगतस्वभावोक्तिः ।

३–शनैरनीयन्त रयात्पतन्तो रथाः क्षितिं हस्तिनखादखेदैः ।
सयत्नसूताऽयतरश्मिभुग्नग्रीवाप्रमंसश्लथयुगैस्तुरंगैः ॥३-६८

वस्तुनोऽसाधारणधर्मवर्णनात् क्रियागतस्वभावोक्तिः ।

४–उत्तालतालीवनसम्प्रवृत्तसमीरसीमन्तितकेतकीकाः ।
आसेदिरे लावणसैन्धवीनां चमूचरैः कच्छभुवां प्रदेशाः ॥३-८०

वर्णविषयकजातिगतस्वभावोक्तिः ।

५–आरक्षमग्नमवमत्य सृणिं शिताग्र-
मेकं पलायत जवेन कृतार्तनादः ।
अन्यः पुनर्मुहुरुदप्लवतास्तभार-
मन्योन्यतः पथि बताविनिताभिभोष्ट्रौ ॥५-५

विशेषचातुर्यंबोध्यत्वेन जातिगतस्वभावोक्तिः ।

६–अग्रे गतेन वसतिं परिगृह्य रम्या-
मापात्यसैनिकनिराकरणाकुलेन ।
यान्तोऽन्यतः प्लुतकृतस्वरमाशु दूरा-
दुद्बाहुना जुहुविरे मुहुरात्मवर्ग्याः ॥५-१५

स्वाभाविकक्रियारूपवर्णनात् स्वभावोक्तिरत्र ।

७–यानाज्जनः परिजनैरवतार्यमाणा
राज्ञीर्नरापनयनाकुलसौविदल्लाः ।
स्रस्तावगुण्ठनपटाः क्षणलक्ष्यमाण-
वक्त्रश्रियः सभयकौतुकमीक्षते स्म ॥५-१७

संस्थानविषयकस्वभावोक्तिरत्र ।

८–यावत्त एव समयः सममेव ताव-
दव्याकुलाः पटमयान्यभितो वितत्य ।
पर्यापतत्क्रयिकलोकमगण्यपण्य-
पूर्णापणा विपणिनो विपणीर्विभेजुः ॥५-२४

वस्तुनोऽसाधारणधर्मवर्णनात् स्वभावोक्तिरत्र ।

९–अल्पप्रयोजनकृतोरुतरप्रयासै-
रुद्गूर्णलोष्टलगुडैः परितोऽनुबिद्धम् ।

दद्यातमुद्द्रुतमनोकहजालमध्या-
दन्यः शरां गुणमनल्पमवन्नवाप ॥५-२५

स्वाभाविकक्रियाकारवर्णनात् स्वभावोक्तिरत्र ।

१०-प्रथाविं भूमिपतिभि. समवीतनिद्रै-
रदनम् पुरो हरितकं मुदमादधान. ।
ग्रीवाप्रलोलकनकिङ्किणिकानिनाद-
मिश्रं दधद्दशनचर्चुरचब्दमश्वः ॥५-५८

प्रस्तुते स्वाभाविकचारुवर्णनात् स्वभावोक्तिः ।

११-मुक्तास्तृणानि परितः कटकं चरन्त-
स्त्रुट्यद्वितानतनिकाव्यतिपङ्गभाजः ।
सस्रुः सरोपपरिचारकवार्यमाणा
दामाञ्चलस्खलितलोलपदं तुरगाः ॥५-६१

प्रकृतस्य चारुवर्णनात् स्वभावोक्तिः ।

१२-उत्तीर्णभारलघुनाप्यलघूलपौघ-
सौहित्यनि.सहतरेण तरोरधस्तात् ।
रौमन्थमन्थरचलद्गुरुसास्नमासां
चक्रे निमीलदलसेक्षणमौक्षकेण ॥५-६२

स्वाभाविकक्रियारूपवर्णनात् स्वभावोक्तिरत्र ।

१३-विततवलिविभाव्यपाण्डुलेखाकृतपरभागविलीनरोमराजिः ।
कृशमपि कृशतां पुनर्नयन्ती विपुलतरोन्मुखयौवनावलग्नम् ॥७-३३

विशेषचातुर्यबोधकत्वेन प्रकृतस्य वर्णनात् स्वभावोक्तिरत्र ।

१४–मृदुचरणतलाग्रदुःस्थितत्वादसहतरा कुचकुम्भयोर्भरस्य ।
उपरि निरवलम्बनं प्रियस्य न्यपतदथोच्चतरोच्चिचीषयान्या ॥७-४८

सहृदयजनसंवेद्यप्रस्तुतस्य वर्णनात् स्वभावोक्तिः ।

१५–आयासादलघुनितम्बैः स्वनद्भिः
श्रान्तानामविवलोचनारविन्दैः ।
अभ्यस्य कथमपि योषितां समूहै-
स्तैरुर्वीनिहितचलत्पदं प्रचेले ॥८-१

स्वाभाविकक्रियारूपवर्णनात् स्वभावोक्ति. ।

१६–आसीना तटभुवि सस्मितेन भर्त्रा
रम्भोरूरवतरितुं सरस्यनिच्छुः ।
धुन्वाना करयुगमीक्षितुं विलासा-
ञ्छीतालुः सलिलगतेन सिच्यते स्म ॥८-१६

रसिकजनसंवेद्यप्रकृतस्य चारुवर्णनात् स्वभावोक्तिः ।

१७–उत्तुङ्गादनिलचलांशुकास्तटान्ता-
च्चेतोभिः सह भयदर्शिनां प्रियाणाम् ।
श्रोणीभिर्गुरुभिरतूर्णमुत्पतन्त्य-
स्तोयेषु द्रुतरमङ्गना निपेतुः ॥८-३१

सहोदरानुप्राणिता संस्थानविषयकस्वभावोक्तिः ।

१८–प्रहरकमपनीय स्वं निदिद्रासतोच्चैः
प्रतिपदमुपहूतः केनचिज्जागृहीति ।
मुहुरविशदवर्णां निद्रया शून्यशून्यां
दददपि गिरमन्तर्बुध्यते नो मनुष्यः ॥११-४

वस्तुनः स्वाभाविकक्रियास्वरूपवर्णनात् स्वभावोक्तिः ।

१९–क्षितितटशयनान्तादुत्थितं दानपङ्क-
प्लुतबहुलशरीरं शाययत्येष भूयः ।
मृदुचलदपरान्तोदीरितान्दूनिनादं
गजपतिमधिरोहः पक्षकव्यत्ययेन ॥११-७

प्रस्तुतस्यासाधारणवर्णनात् स्वभावोक्तिरत्र ।

२०–अनुनयमगृहीत्वा व्याजसुप्ता पराचो
रुतमथ कृकवाकोस्तारमाकर्ण्य काले ।
कथमपि परिवृत्ता निद्रयाऽन्धा किल स्त्री
मुकुलितनयनैवा श्लिष्यति प्राणनाथम् ॥११-६

प्रकृतस्य स्वाभाविकजातिगुणवर्णनात् स्वभावोक्तिः ।

२१–परिशिथिलितकर्णग्रीवमामीलिताक्षः
क्षणमयमनुभूय स्वप्नमूर्ध्वज्ञुरेव ।
रिरसयिषति भूयः शष्पमग्रे विकीर्णं
पटुतरचपलौष्ठः प्रस्फुरत्प्रोथमश्वः ॥११-११

प्रस्तुतस्य चारुवर्णनात् जातिगतस्वभावोक्ति ।

२२–उरसिक्षतगात्रः स्म विडम्बयन्नभः समुत्पतिष्यन्तमगेन्द्रमुच्चकैः ।
आकुञ्चितप्रोहनिरूपितक्रम करेणुरारोहयते निषादिनम् ॥१२-५

उत्प्रेक्षानुप्राणितास्वभावोक्तिरत्र ।

२३–स्वैरं कृतास्फालनलालितान् पुरः स्फुरत्तनून्दर्शितलाघवक्रिया ।
वल्गावलग्नैकसवल्गपाणयस्तुरंगमानारुरुहुस्तुरंगिणः ॥१२-६

जातिक्रियागतस्वभावोक्तिरत्र ।

२४–महाय यादव चकार भूयसे निर्पेदिवानाननवन्धमध्वने ।
तीक्ष्णोत्थितास्तावदवह्यरंहसो विश्रृङ्खल श्रृङ्खलकाः प्रतस्थिरे ॥१२-७

प्रस्तुतस्य यथावद्व्यापारवर्णनात् स्वभावोक्तिः ।

२५–तत्यातुमिच्छन्विधृतः पुरो बलान्निधीयमाने भरनाजि मन्दरे ।
अघोद्ध ज्झितोद्गारविजर्जरस्वरः स्वनाम निन्ये रवणः स्फुटार्थताम् ॥१२-६

वस्तुनः स्वाभाविकक्रियारूपवर्णनात् स्वभावोक्तिः ।

२६–नतयागृहीतोऽपि धुवन्विपाणयोर्युगं ससूत्कारविवर्तितत्रिकः ।
गोर्णीं जनेन स्म निवातुमुद्धतानुसरां नौक्षतरः प्रतीच्छति ॥१२-१०

प्रकृतस्य यथावद्वर्णनात् स्वभावोक्तिः ।

२७–ऋजुग्रीदैर्यानैरवतत्य कन्धराश्चलावचूडाः कलघर्घरारवैः ।
भूमिर्महःमयविलम्बितक्रमं क्रमेलकैस्तत्क्षणमेव चिच्छिदे ॥१२-१८

प्रकृतस्य स्वाभाविकक्रियावर्णनात् स्वभावोक्तिरत्र ।

२८–स्मावृतवक्त्रैरनिलैनमूर्वरैर्वर्जित्रिरेव क्षणमीक्षितानना: ।
दहगद्गरीय- स्तनकम्प्रकञ्चुक यमुग्धुरंगाधिरहोऽवरोधिकाः ॥१२-२०

विशेषचातुर्यबोधकत्वेन प्रकृतवर्णनात् स्वभावोक्तिरत्र ।

२९–दुर्दान्तमुत्प्लुत्य निरस्तसादिनं सुहासहाकारमलोकयज्जनः ।
पर्याणतस्तस्य मुरोविलम्बिनस्तुरङ्गमं प्रद्रुतमेकया दिशा ॥१२-२२

प्रस्तुतस्य स्वाभाविकक्रियावर्णनात्स्वभावोक्तिरत्र ।

३०–वस्तौ समासन्नकरेणुमूत्कृतानियन्तरि व्याकुलमुक्तरज्जुके ।
क्षिप्तावरोधाङ्गनमुत्पथेन गां विलङ्घ्य लक्ष्मीं करभी वनस्म्जनुः ॥१२-२४

प्रकृतस्य स्वाभाविकगुणक्रियावर्णनात्स्वभावोक्तिरत्र ।

३१–वन्येभदानानिलगन्धदुर्धराः क्षणं तरुच्छेदविनोदितक्रुधः ।
व्यालद्विपा यन्तृभिरुन्मदिष्णवः कथंचिदारादपथेन निन्यिरे ॥१२-२८

काव्यलिङ्गानुप्राणिता स्वभावोक्तिरत्र ।

३२–निम्नानि दुःखादवतीर्य सादिभिः सयत्नमाकृष्टकशाः शनैः शनैः ।
उत्तेरुरुत्तालखुरारवं द्रुताः श्लथीकृतप्रग्रहमर्वतां व्रजाः ॥१२-३१

सुहृज्जनसंवेद्य प्रकृतस्य चारुवर्णनात्स्वभावोक्तिरत्र ।

३३–आगच्छतोऽनूचि गजस्य घण्टयोः स्वनं समाकर्ण्य समाकुलाङ्गनाः ।
दूरादपावर्तितभारवाहणाः पथोऽपसस्रुस्त्वरितं चमूचराः ॥१२-३४

प्रकृतस्य स्वाभाविकरूपवर्णनात्स्वभावोक्तिः ।

३४–कोशातकीपुष्पगुलुच्छकान्तिभिर्मुखैर्विनिद्रोल्वणबाणचक्षुषः ।
ग्रामीणवध्वस्तमलक्षिता जनैश्चिरं वृतीनामुपरि व्यलोकयन् ॥१२-३७

चपलासंश्लिष्टस्वभावोक्तिरत्र ।

३५–गोष्ठेषु गोष्ठीकृतमण्डलासनान् सनादमुत्थाय मुहुः स वल्गतः ।
ग्राम्यानपश्यत् कपिशं पिपासतः स्वगोत्रसंकीर्तनभावितात्मनः ॥१२-३८

प्रस्तुतयोर्जातिक्रिययोर्यथावद्वस्तुवर्णनात् स्वभावोक्तिः ।

३६–प्रीत्या नियुक्ताँल्लिहतीः स्तनंधयान्निगृह्य पारीमुभयेन जानुनोः ।
वर्धिष्णुधाराध्वनि रोहिणीः पयश्चिरं निदध्यौ दुहतः स गोदुहः ॥१२-४०

प्रकृतस्य यथावच्चारुवर्णनात् स्वभावोक्तिरत्र ।

३७–अभ्याजतोऽभ्यागततूर्णतर्णकाश्रियालिहस्तस्य पुरो दुधुक्षत ।
वर्गाद्गवां हुंकृतिचारु निर्यतीमरिर्मधोरैक्षत गोमतल्लिकाम् ॥१२-४१

प्रस्तुतस्य स्वाभाविकक्रियारूपवर्णनात् स्वभावोक्तिः ।

३८-दन्ताग्रनिर्भिन्नपयोदमुन्मुखाः शिलोच्चयानारुरुहुर्महीयसः ।
तिर्यक्कटप्लाविमदाम्बुनिम्नगाविपूर्यमाणश्रवणोदरं द्विपाः ॥१२-४३

वस्तुनो वर्णविषयकस्वभावोक्तिरत्र ।

३९-शैलाधिरोहाभ्यसनाधिकोद्धुरैः पयोधरैरामलकीवनाश्रिताः ।
तं पर्वतीयप्रमदाश्चचायिरे विकासविस्फारितदिङ्नेक्षणाः ॥१२-५१

विशेषणानुबोध्यत्वेन प्रकृतवर्णनात्स्वभावोक्तिः ।

४०-स्मश्रूयमाणे मधुजालके तरोर्गजेन गण्डं कषता विधूनिते ।
क्षुद्राभिरक्षुद्रतराभिराकुलं विदश्यमानेन जनेन दुद्रुवे ॥१२-५४

उपमासंश्लिष्टस्वभावोक्तिरत्र सा च वर्णविषयका ।

४१-प्रोथैः स्फुरद्भिः स्फुटगन्धमुन्मुखैस्तुरङ्गमैरायतकीर्णवालधि ।
उत्कर्णमुद्ग्राहितधीरकन्धरैरवीर्यताग्रे तटदत्तदृष्टिभिः ॥१२-७३

वस्तुनः स्वाभाविकक्रियावर्णनात्स्वभावोक्तिः ।

४२-तीर्त्वा जवेनैव नितान्तदुस्तरां नदीं प्रतिज्ञामिव तां गरीयसीम् ।
शृङ्गैरपस्कीर्णमहत्तटीनुवामशीनतोच्चैर्नदितं ककुद्मताम् ॥१२-७४

उपमानुप्राणिता स्वभावोक्तिरत्र ।

४३-शब्दितामनपशब्दमुच्चकैर्वाक्यलक्षणविदोऽनुवाक्यया ।
याज्यया यजनकर्मिणोऽत्यजन् द्रव्यजातमपदिश्य देवताम् ॥१४-२०

वस्तुनोऽसाधारणधर्मवर्णनात् स्वभावोक्तिरत्र ।

४४-इति वाचमुद्धतमुदीर्य सपदि सह वेणुदारिणा ।
सोऽट्टरिपुवनभरोऽसहनः स जहास दत्तकरतालमुच्चकैः ॥१५-३९

द्रव्यगतस्वभावोक्तिरत्र ।

४५–प्रणोदिताः परिगतयन्तृकर्मभिर्निषादिभिर्विदितमताङ्कुशक्रियैः ।
गजाः सकृत्करतललोललालिकाहताः मुहुः प्रणदितघण्टमाययुः ॥१८-२५

प्रस्तुतस्य स्वाभाविकक्रियावर्णनात् स्वभावोक्तिरत्र ।

४६–यातैश्चातुर्विध्यमस्त्रादिभेदादभ्यासङ्गैः सौष्ठवाल्लाघवाच्च ।
शिक्षाशक्तिं प्राहरन्दर्शयन्तो मुक्तामुक्तैरायुधैरायुधीया ॥१८-११

प्रकृतस्य यथावच्चारुवर्णनात् स्वभावोक्तिः ।

४७–अन्योन्येषां पुष्करैरामृशन्तो दानोद्भेदानुच्चकैर्भुग्नवालाः ।
उन्मूर्धानः संनिपत्यापरान्तैः प्रायुध्यन्त स्पष्टदन्तध्वनीभाः ॥१८-३२

प्रस्तुतस्य स्वाभाविकक्रियावर्णनात्स्वभावोक्तिः ।

४८–शोचित्वाग्रे भूपयोर्मृत्युभाजोरर्थः प्रेम्णा नो तथा वल्लभस्य ।
पूर्वं कृत्वा नेतरस्य प्रसाद पश्चात्तापादाप दाहं यथान्तः ॥१८-५२

सहृदजनसंवेद्यप्रकृतवर्णनात्स्वभावोक्तिरत्र ।

४९–प्रतिकुञ्चितकूर्परेण तेन श्रवणोपान्तिकनीयमानगव्यम् ।
ध्वनति स्म धनुर्घनान्तमत्तप्रचुरक्रौञ्चरवाऽनुकारमुच्चै ॥२०-११

प्रकृतस्य स्वाभाविकक्रियावर्णनात्स्वभावोक्ति ।

५०–पृथुदर्विभृतस्ततः फणीन्द्रा विषमाग्नीनिरनारतं वमन्त ।
अभवन् युगपद्विलोलजिह्वायुगलीढोभयसृक्कभागमाविः ॥२०-४२

प्रस्तुतस्य स्वाभाविकक्रियावर्णनात्स्वभावोक्तिरत्र ।

५१–अथ सस्मितवीक्षितादवज्ञाललितं क्षोभितभ्रु माधवेन ।
निजकेतुशिरःश्रितः सुपर्णादुदपप्तन्नयुतानि पक्षिराजाम् ॥२०-५२

द्रव्यगतस्वभावोक्तिरत्र सा च वर्णविषयिका ।

५२-ककुभ कृतनादमास्तृणन्तस्तिरयन्तः पटलानि भानुभासाम् ।
उदनसिपुरभ्रमभ्रसंघा सपदि श्याममलिमानमानयन्तः ॥२०-६७

अस्तुन यथावच्चारुवर्णनात्स्वभावोक्ति ।

---

# भावः

१-विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुन स पुरस्त्रियैकतमयैकया दृशा ॥१३-४०

अत्र सहरिः पुरस्त्रिया दृशा पपे इति तात्कालिकविकाराद्भाव ।

२-अधिकोन्नमद्धनपयोधर मुहुः प्रचलत्कलापिकलशाङ्कृनस्वना ।
अभिकृष्णमङ्गुलिमुखेन काचनद्रुतमेककर्णविवर व्यघट्टयत् ॥१३-४१

अत्र कर्णविवरविघट्टनाद्धरिं प्रति स्वरति दर्शनाद्भावालंकारः ।

३-परिपाटलाब्जदलचारुणासकृच्चलिताङ्गुलीकिसलयेन पाणिना ।
मदिर प्रकम्पमपरा रिपुं मधोरनुदीर्णवर्णनिभृतार्थमाह्वयत् ॥१३-४२

अत्राङ्गक्रियादिषु विलासप्रदर्शनाद्धरिं प्रति रतिविकाराद्भावालंकारः ।

---

# भावशवलम्

१-व्रजत. क्व तात व्रजसीति परिचयगतार्थमस्फुटम् ।
धैर्यमभिनद्रुदित शिशुना जननीनिभर्त्सनविवृद्धमन्युना ॥१५-८७

अत्र दैन्यविषादचिन्ताशंकादीनां व्यभिचारिभावानां मेलनात् भावशबलो नामालंकारः ।

रूपकम्

- परम्परितम्
  - एकदेश-विवर्ति
  - श्लिष्टशब्द-निबन्धनम्
    - केवलम्
    - माला-रूपम्
  - अश्लिष्ट-शब्दनिबन्धनम्
    - केवलम्
    - माला रूपम्
- साङ्गम्
  - समस्त-वस्तुविषयम्
  - एकदेश-विवर्ति
- निरङ्गम्
  - माला-रूपकम्
  - केवल-रूपकम्

—

परिणाम

- तुल्याधिकरणक
- अतुल्याधिकरणक

—

सन्देहः

- भेदानुक्तौ (शुद्धः)
- भेदोक्तौ
  - निश्चयगर्भ
  - निश्चयान्त

—

अपह्नुति.

- भिन्नवाक्या
  - हेत्वा
  - शुद्धा
  - पर्यस्ता
- एकवाक्या
  - भ्रान्ता
  - छेका
  - कैतवा




कुवलयानन्दकारानुसारेणाष्टविधैषा—

1–रूपकातिशयोक्ति । 2–भेदकातिशयोक्तिः । 3–सम्बन्धातिशयोक्ति । 4–असंबन्धातिशयोक्ति । 5–अक्रमातिशयोक्ति (कार्यकारणयो सहत्वे) । 6–चपलातिशयोक्तिः (कार्यप्रकृष्टत्वे) । 7–अत्यन्तातिशयोक्ति (पौर्वापर्यविपर्यये) । 8–सापह्नवा ।






सहोक्तिः




---

समासोक्तिः




---

परिकरः




---

अर्थश्लेषः




---


अप्रस्तुतप्रशंसा
सारूप्यनिबन्धना
कार्यकारणभावनिबन्धना
सामान्यविशेषभावनिबन्धना
शुद्धसारूप्या
श्लेषमूलसारूप्या
प्रस्तुतकार्येऽ-
प्रस्तुतकारणा
प्रस्तुतकारणेऽ-
प्रस्तुतकार्या
प्रस्तुतसामान्येऽ-
प्रस्तुतविशेषा
प्रस्तुतविशेषे-
प्रस्तुतसामान्या
वाच्यार्थस्य
सम्भवे
OR
वाच्येऽनध्या-
रोपे
वाच्यार्थस्य
असम्भवे
OR
वाच्य-
अध्यारोपे
उभय-
रूपत्वे
OR
प्रशो-
अध्यारोपे
श्लिष्टविशेषण-
विशेष्यनिबन्धना
श्लिष्टविशेषण-
निबन्धना
0सम्भवे
0असम्भवे
0उभयरूपत्वे
0सम्भवे
0असम्भवे
0उभयरूपत्वे
(0=वाच्यार्थस्य)

व्याजस्तुतिः




—

आक्षेपः




—

## विरोधाभास.

1–जात्या सह जातेर्विरोधः।

2–जात्या सह गुणस्य विरोध ।

3–जात्या सह क्रियायाः विरोध ।

4–जात्या सह द्रव्यस्य विरोध ।

5–गुणेन सह गुणस्य विरोध ।

6–गुणेन सह क्रियाया विरोध ।

7–गुणेन सह द्रव्यस्य विरोधः ।

8–क्रियया सह क्रियाया विरोध. ।

9–क्रियया सह द्रव्यस्य विरोधः ।

10–द्रव्येण सह द्रव्यस्य विरोधः ।


विभावना
शाब्दी
आर्थी
हेतो प्रतिषेधे
हेतोर्वैकल्ये
हेतो सप्रतिबन्धकत्वे
हेत्वन्त-रोपादाने
विरुद्ध-हेतूपादाने
हेतु-कार्यविपर्यये

---


विशेषोक्तिः
उक्तनिमित्ता
अनुक्तनिमित्ता
चिन्त्यनिमित्ता
अचिन्त्यनिमित्ता

---


विषमम्
अतिविरूपयो सश्लेषे
कर्तुः क्रियाफलान-वाप्तौ अनर्थप्राप्तौ च
कार्यकारण-धर्मविरोधे
गुणविरोधे
क्रियाविरोधे

---

**अधिकम्**

- आधाराधिक्ये
- आधेयाधिक्ये

---

**अन्योन्यम्**

- गुणाधानम्
  - उत्कर्षावहम्
  - अपकर्षावहम्
- क्रियाधानम्
  - उत्कर्षावहम्
  - अपकर्षावहम्

---

**विशेषः**

- अनाधाराधेये
- एकस्यानेकविषयत्वे
- अशक्येतरकरणे

---

**समम्**

- सद्योगे
- असद्योगे
  - शुद्धम्
  - व्याजस्तुतिपर्यवसायिन्

एकावली




---

काव्यलिङ्गम्




---

पर्यायः



परिवृत्तिः




---

परिसंख्या




---

अर्थापत्तिः



- समुच्चयः
  - समानाधिकरणे
    - गुणयोः यौगपद्ये
    - क्रिययोः यौगपद्ये
    - गुणक्रिया-यौगपद्ये
  - वैयधिकरण्ये
    - गुणयौगपद्ये
    - क्रिया-यौगपद्ये
    - उभय-यौगपद्ये

---

- समाधिः
  - अनायासनिष्पत्तौ
  - साङ्गनिष्पत्तौ

---

- प्रत्यनीकम्
  - साक्षात्सम्बन्धे
  - परंपरासम्बन्धे

---

- प्रतीपम्
  - उपमानस्योपमेयत्वे
  - उपमानस्य निष्फलत्वे

मीलितम्
- स्वाभाविकम्
- औपाधिकम्

---

उत्तरम्
- उन्नेयप्रश्ने
- निबद्धप्रश्ने

---

सूक्ष्मम्
- आकारादर्थज्ञाते
- इङ्गितादर्थज्ञाते

# वर्णानुक्रमणिका

१–अतद्गुण —दशमसर्ग –७६

२–अतिशयोक्ति —प्रथमसर्ग –१३ २३ २५ २७ ४७ ६२ ६६ ७४ द्वितीयसर्ग –१७ २५ ८२ १०७ तृतीयसर्ग —२ ६ ८ १२ १३ १४ २१ २४ २५ २७ ३८ ४४ ५८ ५६ चतुर्थसर्ग —२२ ३८ ४१ ४६ ४६ ६२ ६७ पञ्चमसर्ग –११ षष्टमसर्गः १ २६ ५६ ७२. सप्तमसर्ग.—४ २७ ४१ ४२ ४८ ५५ ६१ ६३ अष्टमसर्ग —२ ७ १३ १५ १८ २२ २६ २७ २८ ३१ ३८ ४४ ४५ ४८ ५३ ५४ ५७ ५८ ६५ नवमसर्ग —१६ २४ ३७ ३६ ४१ ५० ६५ ७३ ८५ ८६ दशमसर्ग –५ ६ १० १७ १६ २५ ४७ ५० ५७ ५६ ६३ ६५ ७३. एकादशसर्ग –५ १६ २८ ४७ ५८ द्वादशसर्ग —२७ २६ ५६ ५७ ५८ ५६ ६० ६१ ६५ त्रयोदशसर्ग —१० १६ ४३ ४८ ६२ ६३ ६४ चतुर्दशसर्ग —५ १० ११ १५ २२ २६ ३० ३१ ३६ ४० ८०. पञ्चदशसर्ग —२५ २६ २७ .८ २६ ३० ५२ ५४ ७४ ७६ ८४. षोडशसर्ग —६१ ६३ ७१ ८३ सप्तदशसर्ग —८ १५ ३३ ५२ ६२ ६३ ६४ ६६. अष्टादशसर्ग —२६ २६ ३० ३६ ४५ ४६ ४७ ४६ ५८ ६० ६१ ६५ ७६ एकोनविंशसर्ग –२७ ६८ ११५ ११६ विंशसर्ग —२६ ३० ५५ ५७ ५८ ६३. (१६६)

३–अधिकम् —प्रथमसर्ग १ २३ त्रयोदशसर्ग –४० चतुर्दशसर्ग ७५ सप्तदशसर्ग —४७ (५)

४–अनुमानम् —सप्तमसर्ग २२. द्वादशसर्ग –६६ (२)

५–अन्योन्यम् —नवमसर्ग —३३. एकोनविंशसर्ग —२० (२)

६ अपह्नुति. —प्रथमसर्ग –७५. सप्तमसर्ग –६. नवमसर्ग —४८ चतुर्दशसर्ग –१२, एकोनविंशसर्ग –७० ६६. (६)

७–अप्रस्तुतप्रशंसा—द्वितीयसर्ग –१० ४६ ४६ ५३ षोडशसर्ग –२१ २२ २३ २४ २६ २७ २८ २९ ३० ३१ ३२ ४०. (१६)

८–अर्थश्लेष —द्वितीयसर्ग –११७ तृतीयसर्ग –५७ पञ्चमसर्ग –४. द्वादशसर्ग –८ षोडशसर्ग –७ ६ १२ १३ (८)

९–अर्थान्तरन्यास –प्रथमसर्ग –१४ १७ २६ ६७ ७२ ७३ द्वितीयसर्ग –१२ १३ ३५ ३७ ३८ ४० ५१ ६५ ८० ८५ १००. तृतीयसर्ग –३१. चतुर्थसर्ग –१७ पञ्चमसर्ग –६ १४ १६ ३७ ४१ ४२ ४४ ४७ षष्ठसर्ग –४३ ४५ ६३ सप्तमसर्ग –१ २७ ३८ ४३ ५० ५२ ६१ ६८ अष्टमसर्ग –७ १० १२ १८ २० २२ २८ ४५ ५४ ५५ ५७ ५८ ६० ६९. नवमसर्ग –५ ६ १२ १६ २३ २९ ३३ ४३ ४८ ५१ ५७ ६२ ६८ ६९ दशमसर्ग –५ १८ २१ २८ ३५ ७९ एकादशसर्ग –२५ ३३ ३५ ५७ ५९ ६४ द्वादशसर्ग –३२ ५२ त्रयोदशसर्ग –६ १७ ६८ पञ्चदशसर्ग –१ ४० ४१ ४३ ८९. षोडशसर्ग –४१ ४४ ४६. सप्तदशसर्ग –५० ५९ अष्टादशसर्ग –२३ ६४ ६६. एकोनविंशसर्ग –११९ विंशसर्ग –७४ (९८)

१०–अर्थापत्ति —प्रथमसर्ग –३५ ३६ ३८ द्वितीयसर्ग –४३ चतुर्थसर्ग –१९. ३९ ५७ पञ्चमसर्ग –४७ षष्ठसर्ग –१६ ३९ ६५ सप्तमसर्ग –६८ अष्टमसर्ग –५० नवमसर्ग –५७. दशमसर्ग –६. पञ्चदशसर्ग –४०. षोडशसर्ग ५९. (१७)

११–असङ्गति —दशमसर्ग ४६

१२–आक्षेप - पञ्चदशसर्ग –८३

१३–उत्तरम् —प्रथमसर्ग –२

१४–उत्प्रेक्षा —प्रथमसर्ग –७ ८ ९ १५ २१ २२ ४९ ५७ ६० ७० ७५ द्वितीयसर्ग –४ ७ ३२ ६७ तृतीयसर्ग ५ ६ ७ ९ १० १५ १८ २९ ३३ ३४ ३५ ३९ ४० ४१ ४२ ४३ ४६ ४९ ५५ ६६ ७० ७१ ७२ ७३ ७७ ७८ चतुर्थसर्ग –१ २ ४ ७ २५ ३२ ३५ ४२ ४३ ४६ ४७ ५० ५८ ६८ पञ्चमसर्ग –२ ३ ६ ११ १६ १९ २० २७ ३० ३१ ३२ ३८ ५२ ६९. षष्ठसर्ग –५ ६ ७ ८ १३ १९ ३४ ३६ ३९ ४२ ४४ ४५ ५० ५१ ५२ ५३ ५४ ५८ ५९ ६२ ६४ ६५ ६६

६७ ६९ ७० ७८ ७९ सप्तमसर्ग—१३ २५ २६ २८ ३०
४२ ५५ ५८ ६० ६२ ६४ ६५ अष्टमसर्ग—३ ४ ८ १४ १५
१६ २७ ३३ ३४ ३५ ४० ४२ ४८ ४९ ५० ५१ ५३ ६०
६२ ६३ ६६ ७१. नवमसर्ग—८ १५ १७ १८ २२ २५ २६
२८ ३० ३४ ३९ ४० ४२ ४९ ६३ ६४ ६६ ७० ७१ ७२
८० ८४. दशमसर्ग—२ ६ ७ ९ ११ १४ ३० ३४ ४५ ४६
४८ ४९ ५० ७४ ७५ ७७ ८४ ८५ ९१ एकादशसर्ग—१२
१६ १८ २२ २४ ३० ३१ ३८ ४३ ४४ ४५ ४६ ४९ ५१
५३ ६० ६१ ६२ ६३ द्वादशसर्ग—५ १७ १९ ४३ ५० ६३
६४ ६६ ७० ७१ ७५ ७६ त्रयोदशसर्गः—२ ११ १२ २५
२६ ३० ३६ ३७ ३९ ४५ ४६ ४७ ५१ ५३ ६३ चतुर्दश-
सर्ग.—१ २५ २८ ७६ ७७ पञ्चदशसर्ग—३ ७ ८ ४७ ४९
५१ ५६ ७८ ७९ ८६ ९० ९४ सप्तदशसर्ग—३ ५ ९ १०
१४ १६ २६ ३१ ३२ ३६ ४१ ४९ ५५ ५८ ६० ६५ ६८.
षष्ठादशसर्ग—१ ५ ७ ८ १० २४ ४१ ४३ ४४ ४८ ५४ ६३
६७ ६८ ६९ ७३ ७५ ७८ ७९. एकोनविंशसर्ग—२४ २८ ६८
७० ७१ ८१ ८५ १०० ११० ११६ ११७ विंशसर्ग—४ ६
८ १४ १६ २० २८ ४५ ४८ ६४ ६८ ६९ ७० (२१५)

१५—उदात्त — चतुर्थसर्ग—६० एकादशसर्ग-३६ त्रयोदशसर्ग—५० ५८ ५९
विंशसर्ग—६६ ८४ (७)

१६—उपमा— प्रथमसर्ग—४ ५ ६ ७ ८ १२ १५ १६ १९ २० २१ २२ २४
२५ २८ ३९ ५३ ५४ ७२ ७५ द्वितीयसर्ग—५ ७ १० १४
१८ २५ २८ ३१ ३९ ४७ ५० ५५ ५८ ५९ ६१ ६४ ६९
७२ ७४ ७८ ८१ ८४ ८६ ८७ ८८ ९० ९१ ९२ ९५ ९६
९७ ९९ ११० ११६ तृतीयसर्ग—१ २ ४ ११ १७ २० २२
२४ २६ ३५ ३६ ३७ ४८ ४९ ५६ ६२ ६३ ६४ ६५ ६७
७० ७१ ७५ चतुर्थसर्ग—५ ८ ११ १३ १४ २१ २३ २४
२८ ३० ३१ ३५ ३७ ५१ ५९ ६५ ६७ ६८ पञ्चमसर्ग—
१ ३ ४ ८ ११ १२ १३ १६ २९ ३५ ३६ ४५ ५५ ५६ ५७
६६ ६८. षष्ठमसर्ग—४ ८ ९ १२ २३ २७ २८ ३४ ३५ ३६
३७ ४६ ४८ ५१ ६४ ७१ ७२ ७३ ७५ सप्तमसर्ग—

२३ ४६ ४७ ६६ ७३ अष्टमसर्ग –६ २८ ४६ नवमसर्ग.– ८ ६ १६ २८ ३० ३२ ३६ ३६ ५२ ५५ दशमसर्ग.–१ १३ १५ २५ ६४ ८१ ८७ एकादशसर्ग –३ ६ ८ १४ ३६ ४० ४२ ४५ ४६ ५४ ५५ ५६ ५८ ६२ ६५ ६६. द्वादशसर्ग –२ ४ ११ १४ २५ ३७ ४८ ५४ ५५ ६८ ६६ ७० ७४ ७५. त्रयोदशसर्ग –५ १५ १८ १६ २० २१ २२ २३ २४ २५ २७ २८ २६ ३३ ३७ ३८ ४१ ४२ ५२ ६१ ६५ चतुर्दशसर्ग – ७ १६ २४ ४४ ५० ५२ ७६ ७७ ८४ ८५. पञ्चदशसर्ग – २ ४ ५ ६ ६ १० १३ १५ २० ३३ ३४ ३५ ४४ ४८ ५० ५१ ५२ ५५ ५८ ६२ ६६ ७३ ७४ ७५ ८० ८६ ६० ६२ ६६. षोडशसर्ग –५ १० १२ १८ १६ २४ ३२ ३७ ४३ ५० ५२ ५३ ५८ ६४ ६५ ७२ ८० सप्तदशसर्ग –१ २ ७ १३ १७ १६ २१ २५ २६ ३८ ४३ ४४ ४६ ४८ ५२ ५६ ६७. अष्टादशसर्ग –१ २ ४ ६ ६ १२ २० २५ ३१ ३४ ३५ ३६ ३८ ४० ४१ ४२ ४३ ५० ५१ ५७ ५६ ७१ ७२ ८०. एकोनविंशसर्ग –१ २ ३ ४ ६ ७ १० ११ १२ २२ २५ २६ ४१ ४३ ४५ ४७ ५२ ५३ ५४ ६१ ६४ ६५ ६६ ६६ ७४ ७५ ७६ ७६ ८३ ६३ ६८ १०० १०४ १११ ११६ विंशसर्ग –३ ५ ११ १२ १३ १७ १८ १६ २१ २२ २३ २४ २५ २७ ३० ३१ ३३ ३५ ३८ ४१ ४३ ४४ ४५ ४६ ४७ ४६ ५१ ५३ ५४ ५७ ५६ ६० ६१ ६२ ७१ ७३ ७६ ८१. (३७७)

१७–उपमेयोपमा —एकादशसर्ग.–१५. त्रयोदशसर्ग –४. (२)

१८–ऊर्जस्वी —एकादशसर्ग –२६.

१६–एकावली —सप्तमसर्ग–३ दशमसर्ग. ३३ (२)

२०–काव्यलिङ्गम् —प्रथमसर्ग –३ २४ २६ ३५ ४१ ६१ ७१. द्वितीयसर्ग.–४ ६ ३२ १०२ १०७ ११५. तृतीयसर्ग –१६ २३ ३२ ५२ ५६ ६१ ७६ ८१. चतुर्थसर्ग –१ ५ १५ १७ २२ ४४ पञ्चमसर्ग.– ५ १७ १८ २२ २३ २६. षष्ठसर्ग –३८ ४७ ६१. सप्तमसर्ग – २० २८ ५१ ६३ ७५. अष्टमसर्ग.–११ १६ ३२ ३७ ४३ ५० ५६ ६६ ७०. नवमसर्ग–१३ २१ ५६. दशमसर्ग—

३ २३ ६१ ६६ ७३ ८३ ८४ ८८ ९०. एकादशसर्ग –२ ५ १५ २३ ३४ ३६ ५४ ५५. द्वादशसर्ग –१ २४ २६ २८ २९ ४२ ४४ ५३ ६१ ६२ ६५ ७३ त्रयोदशसर्ग –३ २६ ४८ चतुर्दशसर्ग –४ १५ २३ २४ २६ २७ २९ ३१ ३२ ३५ ३८ ५१ ५७ ५९ ६१ ६२ ७९ ८२ ८७ पञ्चदशसर्ग –६ ११ १४ १८ १९ २१ २२ २३ ३१ ३६ ३७ ३८ ४१ ४२ ४५ ५३ ५५ ५७ ५९ ६८ ७० ७७ ७८ ८१ ८५ ९३ ९५ ९६ षोडशसर्ग –४५ ५२ ५४ ८५ सप्तदशसर्ग –६ ३३ ३४ ५३ ६२ ६६ ६८ अष्टादशसर्ग –३ १३ १६ १७ २० २१ ३४ ३७ ५६ ५८ ६१. एकोनविंशसर्ग –१६ २१ ३१ ३५ ३८ ५३ ५७ ५८ ७८ ८० ९७ ९९ १०१. विंशसर्ग –१ ७ ३२ ३४ ३६ ३७ ३९ ६३ (१७५)

२१–तद्गुण —प्रथमसर्ग –९. द्वितीयसर्ग.–२० २१. चतुर्थसर्गः–१४ दशमसर्ग –८६. पञ्चदशसर्ग –७ ४८. सप्तदशसर्ग –४. (८)

२२–तुल्ययोगिता —प्रथमसर्ग –३ ४५ ५२. द्वितीयसर्ग –२४ ३६ ४९ १०१. तृतीयसर्ग.–५३ ५४ ५७ ६० चतुर्थसर्ग –१९ २७ ३८ ४०. पञ्चमसर्गः–६. षष्ठसर्ग –४३ ७९ सप्तमसर्ग –५६ अष्टमसर्ग.–३० ५२ नवमसर्ग.–२४ ४१ ५३. दशमसर्ग –४ ८ १३ ३९ ६९, ७१ ७५ एकादशसर्ग –१५ ६४ द्वादशसर्ग.–३५ ४५ ४९ त्रयोदशसर्ग –४. चतुर्दशसर्ग –३२ ४९ ५५ ५६ ८३ ८६. पञ्चदशसर्ग –८२ षोडशसर्ग –४६ ६४ सप्तदशसर्ग –२२ ६५ अष्टादशसर्ग.–२ ९ ३३ ५५ ६२ एकोनविंशसर्ग –१८ ३२ ६२ ९५ ९७ १०३ ११३ ११४ विंशसर्ग –१५. (६२)

२३–दीपकम् —प्रथमसर्ग –५१. द्वितीयसर्ग –१०९ (२)

२४–दृष्टान्त. —द्वितीयसर्ग –२३ ३४ ६२ ७० ८३. चतुर्दशसर्ग – ८ १३ ४६ पञ्चदशसर्ग –१७ सप्तदशसर्ग –१८ ४० विंशसर्ग –४०.(१२)

२५–निदर्शना —प्रथमसर्ग –१६ ७५. द्वितीयसर्ग.–२ १९ ३१ ४२ ६६ तृतीयसर्ग – ३ ४७ चतुर्थसर्ग –१३ २० २६ २८ ३१ ४४ ५२ – ५६ ६५ ६८. पञ्चमसर्ग –२ ४९. षष्ठसर्ग –२१. सप्तमसर्ग –

१५. सप्तमसर्ग –१८ ५६ नवमसर्ग –५३ ७९. दशमसर्ग – ३१. एकादशसर्ग –१६ ५०. द्वादशसर्ग –१४. त्रयोदशसर्ग – १३ षोडशसर्ग –५८ सप्तदशसर्ग –१२ ३०. एकोनविंशसर्ग.- ५१ विंशसर्ग –५० ५६ ७५ (३६)

२६–परिकर —सप्तदशसर्ग –२१.

२७–परिणाम —द्वितीयसर्ग –७७ चतुर्थसर्ग –५४. नवमसर्ग.–८७ एकादशसर्ग –४०. चतुर्दशसर्ग –३६. (५)

२८–परिवृत्ति —प्रथमसर्ग –५०. पञ्चदशसर्ग –४० अष्टादशसर्ग –१५ (३)

२९–परिसंख्या —द्वितीयसर्ग –२२. चतुर्दशसर्ग –४१ ४८ ५४ ५८ (५)

३० पर्याय —सप्तमसर्ग –६६ विंशसर्ग –७८. (२)

३१–पर्यायोक्तम् —द्वितीयसर्ग –६३.

३२–प्रतिवस्तूपमा —प्रथमसर्ग –३८ द्वितीयसर्ग –८ २३. (३)

३३–प्रतीपम् —षोडशसर्ग - ६१

३४–प्रत्यनीकम् —नवमसर्ग –६३. चतुर्दशसर्ग –७८.

३५–प्रेय. —षष्ठसर्ग –७४. नवमसर्ग.–२ ५४. दशमसर्ग –८०. त्रयोदशसर्ग–४६. चतुर्दशसर्ग –११. (६)

३६–भ्रान्तिमान् —तृतीयसर्ग -४८ ५१. चतुर्थसर्ग –४६ ५३. पञ्चमसर्ग.–३२. षष्ठसर्ग.–११. सप्तमसर्ग –२४. नवमसर्ग:–१८ ३५. दशमसर्ग:–५ एकादशसर्ग –५२. त्रयोदशसर्ग.–५ ३२ ४४ ४६ ५६ ६०. पञ्चदशसर्ग –६१. अष्टादशसर्ग –५३. विंशसर्ग –७ (२०)

३७–भाव. —त्रयोदशसर्ग.–४० ४१ ४२. (३)

३८–भावशबलम् —पञ्चदशसर्ग.–८७.

३९–भावोदयः —एकादशसर्ग –६७.

४०–मीलितम् —षष्ठसर्ग –४० दशमसर्ग –२६. द्वादशसर्ग –१५ (३)

४१–यथासंख्यम् —नवमसर्ग.–५३. दशमसर्ग –१४ ३४. विंशसर्ग –१५ (४)

४२–रसवद् —तृतीयसर्ग –३०. षष्ठसर्ग:–३१. (२)

४३–रूपकम् —प्रथमसर्ग –३४ ३६. द्वितीयसर्ग –३ ३८ ८२ ८६ ९२ ९१

१११ ११७ ११८ तृतीयसर्ग -३१ चतुर्थसर्ग -४८ पञ्चम-
सर्ग–१३ ६९. षष्ठसर्ग.–४६ ५० ५४ ५८ ६- ६२ ६७ ७०
सप्तमसर्ग –७ २३ २५ ५७ ७४ अष्टमसर्ग –१४ २२ २७
३३ ३६ ४६. नवमसर्ग –३ १० ११ १८ २७ ३१ ३४ ३६,
४५ ४७ दशमसर्गः–५८ ६८ एकादशसर्ग –१० २१ ६८ ४४
४७ ४६ द्वादशसर्ग –४६. त्रयोदशसग–४८ ५४ ६१,
चतुर्दशसर्ग–६ १६ २५ ३४, पञ्चदशसर्ग -७ १- ५७ ६०
६०. षोडशसर्ग –६७ सप्तदशसर्ग -४१ ५७ ६१ ६६
अष्टादशसर्ग –१५ ३५ ५६ ७२ ७३ एकोनविंशसर्ग ५ ११
३६ ४४ ७१ १०६ १२० विंशसर्ग -२ ३३ ७५ ७७ (८६)

४४–वक्रोक्ति. —पञ्चदशसर्ग –२३.

४५–विचित्रम् —त्रयोदशसर्ग –८.

४६–विभावना —प्रथमसर्ग।–१० चतुर्थसर्ग –५३ सप्तमसर्ग –५७ अष्टमसर्ग –
६१. दशमसर्ग –२७ ४१. त्रयोदशसर्ग –१३. पञ्चदशसर्ग –
२४ ८० ८२. (१०)

४७–विरोधाभासः—प्रथमसर्ग.–१ ३६ ६७ द्वितीयसर्ग –६ १६ तृतीयसर्ग –३२
४४ ५०. चतुर्थसर्ग –१२. पञ्चमसर्ग –५३ षष्ठसर्ग –६१.
सप्तमसर्ग ५६ ७०. अष्टमसर्ग –५ ६ ३६ ३८ नवमसर्ग –
६६ ७८ ८१. दशमसर्ग –६८ ७० ८६ ८७ ८६ एकादश-
सर्ग –४ २६ ३१ ५५. द्वादशसर्ग –३३ ५६ ६७ त्रयोदशसग –
८ ४६ ५१ ६६. चतुर्दशसर्ग –३५ ६२ ६६ ७० ७२ ७४
८१ ८८. पञ्चदशसर्ग.–३० षोडशसर्ग –८ ६६ ६६ ७६
सप्तदशसर्ग–६· ६७. अष्टादशसर्ग –१८ २२ २८ एकोनविंश-
सर्ग –२३ २७ ४६ ५६ ६७ ७३ १०५ १०६ विंशसर्ग –
२६ ८२. (६४)

४८–विषमम् —प्रथमसर्ग.–५६ ६१ ६५. द्वितीयसर्ग –७८ ७६. तृतीयसर्ग –
४५. अष्टमसर्ग.–२८ ४१ ६५ एकादशसर्ग –६४. चतुर्दश-
सर्गः—२ पञ्चदशसर्ग· १६. (१२)

४६–विशेष —द्वितीयसर्ग –२५

५०–विशेषोक्ति —अष्टमसर्ग –६१ नवमसर्ग –१४ ७३ दशमसर्ग –२७ २८ ४१
द्वादशसर्ग –३६ चतुर्दशसर्ग –४५ ४७ पञ्चदशसर्ग.–१६ (१०